अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत्पुण्डरी
काक्षं स बाह्याभ्यन्तरः शुचिः ॥ इति पूजनसामग्रीमान्मानं
च संप्रोक्ष्य अष्टदले गौरीगणेशं संस्थाप्य शान्तिपाठं पठेत्-
आनोभुद्राः क्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः
देवानोयथासदामिद्वृधेऽअसुन्नप्प्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥
देवानांभुद्रासुमतिर्ऋजूयतान्देवाना ँ रातिरभिनोनिवर्त्त
ताम् । देवाना ँ सख्यमुपसेदिमाव्वयन्देवानऽआयुः प्प्रति

मह रन्तुजीवसे ॥ २ ॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्र प्र.प.
४ मदितिन्दक्षमस्रिधम् । अर्य्यमणंव्वरुणꣳसोममश्विनासर
स्वतीनःसुभगामयस्करत्॥३॥तन्नोव्वातोमयोभुव्वातुभेषजन्त
न्मातापृथिवीतत्पिताद्यौः। तद्ग्रावाणःसोमसुतोमयोभुवस्तद
श्विनाशृणुतन्धिष्ण्यायुवम् ॥४॥ तमीशानञ्जगतस्तस्थुषस्प
तिन्धियञ्जिन्वमवसेहूमहेव्वयम् । पूषानोयथाव्वेदसामसद्वृधे
रक्षितापायुरदब्धःस्वस्तये ॥५॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्व ४

ग्रह स्तिनःपूषाव्विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्व प्र.९
५ स्तिनोबृहस्पतिर्द्दधातु ॥ ६ ॥ पृषदश्वामरुतःपृश्निमातरः
शुभंऽयावानोव्विदथेषुजग्मयः । अग्निजिह्वामनवःसूरचक्ष-
सोव्विश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिःशृ
णुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳ
संस्तनूभिर्व्व्यशेमहिदेवहितंऽयदायुः ॥ ८ ॥ शतमिन्नुश
रदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् । पुत्रासोयत्रपि ५

मह ६

तरोभवन्तुमानोमुद्ध्यारीरिषतायुर्ग्गन्तोः ॥ ९ ॥ अदितिर्द्यौर प्र.प.
दितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः । विश्वेदेवाऽअ
दितिःपञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥१०॥ द्यौः
शान्तिरन्तरिक्षःशान्तिः पृथिवीशान्तिरापःशान्तिरोषधयः
शान्तिः । वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिः
सर्वःशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥११॥ यतो
यतःसमीहसेततोनोऽअभयङ्कुरुशन्नःकुरुप्रजाभ्योभयन्नः

मह पुशुभ्यः ॥ १२ ॥ गुणानान्त्वागुणपतिर्ठ०हवामहेप्रियाणा
न्त्वाप्प्रियपतिर्ठ० हवामहेनिधीनान्त्वांनिधीपतिर्ठ०हवामहे
व्वसोमम । आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ १३ ॥ प्र.प.
अम्बेऽअम्बिकेम्बांलिकेनमांनयातिकश्चन । ससंस्त्यश्वकश्सुभ
द्रिकाङ्काम्पीलवासिनीम् ॥१४॥ लक्ष्मीनारायणाभ्यां नमः ।
उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः ।
७ शचीपुरन्दराभ्यां नमः । मातृपितृचरणकमलभ्यो नमः । ८

इष्टदेवताभ्योनमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः । इति प्रणम्य

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नमानि यः पठेच्छृणुयादपि ॥ विद्या

रम्भे विवाहे च प्रवेशे निर्गमे तथा। सङ्ग्रामे सङ्कटे चैव
विघ्नस्तस्य न जायते शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भु-
जम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये। अभीप्सितार्थ-
सिद्ध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये
नमः॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये
त्र्यम्बके गौरि नारायाणि नमोऽस्तु ते॥ सर्वदा सर्वकार्येषु
नास्तित तेषाममङ्गलम्। येषां हृदिस्थो भगवान्मङ्गलायतनं

मह हरिः । तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
१० विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ प्र.प.
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवर-
श्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र
पार्थो धनुर्द्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥
अनन्यांश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्या-
भियुक्तानां योगक्षेमं वहाम्यहम् ॥ स्मृते सकलकल्याण- १०

भाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं
हरिम् ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु
नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विश्वेशं माधवं ढुण्ढिं दण्ड-
पाणिं च भैरवम् । वन्दे काशीं गुहां गङ्गां भवानीं मणि-
कर्णिकाम् ॥ इति नमस्कृत्य सङ्कल्पं कुर्यात्--ॐ विष्णुः ३
श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्य
श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वत-

मह मन्वन्तर अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बू-
१२ द्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे (अविमुक्तवारा- प्र.प.
णसीक्षेत्रे महाश्मशाने आनन्दवने गौरीमुखे त्रिकण्टकवि-
राजिते भागीरथ्याः पश्चिमे तीरे, इति काश्यामेव विशेष:)
विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने
अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे
अमुकपक्षे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशि- १२

ग्रह स्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देव-
१३ गुरौ शेषेषु ग्रहेषु यथा यथास्थानस्थितेषु सत्सु एवंग्रहगुण- प्र.प.
विशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा
ऽहं ( वर्मा, गुप्तः ) मम श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं स्व-
भादिसमस्तारिष्टशान्तये विषशस्त्रादिभयनिवृत्तये क्षेमस्थै-
र्यदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्नसत्सङ्गतिलाभै-
२ श्वर्यायुरारोग्यार्थं सुखसम्पत्तिशत्रुपराजयबहुकीर्त्याद्यनेका- १३

भ्युदयफलप्राप्त्यर्थं ग्रहयागं करिष्ये । तदङ्गत्वने स्वस्ति-
पुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनमायुष्यमन्त्र-
जपं साङ्कल्पिकनान्दीश्राद्धमाचार्यादिवरणं च करिष्ये ।
तत्रादौ निर्विघ्नतासिद्ध्यये गणेशाम्बिकयोः पूजनं करिष्ये'
इति सङ्कल्प्य हस्ते अक्षतान् गृहीत्वा आवाहयेत्—हे हेरम्ब
त्वमेह्येहि अम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्ष-
लाभपितुः पितः ॥ नागास्यं नागहारं त्वां गणराजचतुर्भुजम् ।

ग्रह भूषितं स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ॥ आवाहयामि प्र.प.
१५ पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्व पूजां
यागञ्च रक्ष मे ॥ गुणानांन्त्वागुणपंतिꣳहवामहेप्रियाणां
न्त्वाप्रियपंतिꣳहवामहेनिधीनान्त्वांनिधिपतिꣳहवामहेवसो
मम । आहमंजानिगर्भधमात्वमंजासिगर्भधम् ॥ ॐभूर्भुवः
स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः । श्री-
मन्महागणाधिपतिमावाहयामि स्थापयामि । हेमाद्रितनयां १९

ग्रह देवीं वरदां भैरवप्रियाम् । लम्बोदरस्य जननीं गौरीमावा-
१६ हयाम्यहम् ॥ अम्बेऽअम्बिकेऽम्बालिकेनमानयतिकश्चन ।
ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ गौर्यै नमः गौरी-
मावाहयामि स्थापयामि । मनोजूतिर्जुषतामाज्यस्यबृह
स्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिमन्दधातु । विश्वे-
देवासऽइहमादयन्तामोꣳ३प्रतिष्ठ ॥ अस्यै प्राणाः प्रतिष्ठन्तु
अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च १६

कश्चन ॥ ॐभूर्भुं० गणेशाम्बिके सुप्रतिष्ठिते वरदे भवताम् ।
ग्रह विचित्ररत्नखचितं दिव्यास्तरणसंयुतम् । स्वर्णसिंहासनं चारु प्र.प.
१७ गृह्णीष्व सुरपूजित ॥ पुरुषऽएवेदꣳसर्व्वँय्यद्भूतँय्यच्चभा
व्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ ॐभूर्भुं०
आसनार्थे अक्षतान् समर्पयामि । सर्वतीर्थसमुद्भूतं पाद्यं
गन्धादिभिर्युतम् । विघ्नराज गृहाणेदं भगवन्भक्तवत्सल ॥
एतावानस्यमहिमातोज्यायाँश्चपूरुषः । पादोस्यविश्वाभूता- १७

निं॑त्रि॒पादं॑स्या॒मृतं॑न्दि॒वि ॥ ॐभूर्भु॰ पादयोः पाद्यं समर्प॰ । गणाध्यक्ष नमस्तेऽस्तु गृहाण करुणाकर । अर्घ्यं च फल-संयुक्तं गन्धमाल्याक्षतैर्युतम् ॥ त्रि॒पादू॒र्ध्वउदै॒त्पुरु॑षः॒पादो॑ऽस्ये॒हाभ॑वत्पुनः॑ । ततो॒विष्व॒ङ्व्य॑क्रामत्साशनानश॒ने अ॒भि ॥ ॐभूर्भु॰ हस्तयोरर्घ्यं सम॰ । विनायक नमस्तुभ्यं त्रिदशै-रभिवन्दित । गङ्गोदकेन देवेश कुरुष्वाचमनं प्रभो ॥ ततो॑ वि॒राड॑जायत वि॒राजो॒ऽअधि॒पूरु॑षः । सजा॒तोऽअत्य॑रिच्यत

ग्रह पश्चाद्भूमिमथोपुरः॥ ॐ भूर्भु० अर्घाङ्गमाचमनीयं समर्प० । प्र.१.
१६ मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् । तदिदं कल्पितं
देव स्नानार्थं प्रतिगृह्यताम्॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं
पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यानारण्याग्राम्याश्च ये॥
ॐ भूर्भु० स्नानं सम० । स्नानान्ते पुनराचमनीयं स० । अथवा-
गणेशाम्बिकाभ्यां नमः- एतानि पाद्यार्घ्याचमनीयस्नानीय-
पुनराचमनीयानि समर्पयामि । पयः पृथिव्याम्पयऽओषधीषु १६

पयोदिव्यन्तरिक्षेपयोधाः । पयस्वतीःप्प्रदिशःसन्तुमह्यम् ॥
ॐभूर्भु० पयः स्नानं समर्प० । स्नानान्ते शुद्धोदकस्नानं
सम०। एवं सर्वत्र । दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवा-
जिनः।सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत्॥ॐभूर्भु०
दधिस्नानं समर्प० । घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितो-
घृतम्वस्यधाम । अनुष्वधमावहमादयस्वस्वाहाकृतम्वृषभ
वक्षिहव्यम् ॥ ॐभूर्भु० घृतस्नानं समर्प० । मधुवाताऽऋता

मह यतेमधुंक्षरन्तिसिन्धवंः । माध्वीर्न्नःसन्त्वोषधीः ॥ मधुनक्तं प्र.प.
मुतोषसोमधुंमत्पार्थिवुरजः । मधुद्यौरंस्तुनःपिता ॥ मधुं
२१ मान्नोव्वनुस्पतिम्मधुंमाँ२ऽअस्तुसूर्यः । माध्वीर्गावोभ-
वन्तुनः ॥ ॐभूर्भु० मधुस्नानं समर्प० । अपाᳬरसमुद्वय
सुᳫसूर्य्येंसन्तंᳫसमाहितम् । अपाᳬरसंस्ययोरसस्तम्वोगृह्णा
म्युत्तममुंपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरि-
न्द्रायत्वाजुष्टंतमम् ॥ ॐभूर्भु० शर्करास्नानं समर्प० । [पञ्चा २१

मृतं मयाऽऽनीतं पयो दधि घृतं मधु । शर्करा च समायुक्तं
स्नानार्थं प्रतिगृह्यताम् ॥ पञ्चनद्यः सरस्वतीमपियन्तिस-
स्रोतसः । सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ॐभूर्भु०
पञ्चामृतस्नानं समर्प० ।] कावेरी नर्मदा वेणी तुङ्गभद्रा सर-
स्वती । गङ्गा च यमुना तोयं मया स्नानार्थमर्पितम् । आपो-
हिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन । महेरणायचक्षसे ॥ ॐ
भूर्भु० शुद्धोदकस्नानं समर्प० ।स्नानान्ते आचमनीयं समर्प० ।

मह युवा सुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः।
२२ तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः॥ प्र.५
सुजातोज्योतिषासहशर्म्मवरूथमासदत्स्वः। वासोऽअग्नेवि-
श्वरूपसंव्ययस्वविभावसो॥ ॐभूर्भु॰ अधोवस्त्रं समर्प॰।
वस्त्रान्ते आचमनीयं समर्प॰। शीतवातोष्णसन्त्राणं लज्जाया
रक्षणं परम्। देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे॥
ॐभूर्भु॰ उपवस्त्रं समर्प॰। नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवता- २२

मह मयम् । उपवीतं मया दत्तं गृहाण परमेश्वर ॥ यज्ञोपवीतं प्र.प.
२४ परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं
प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि
यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ ॐभूर्भु० यज्ञोपवीतं
समर्प० । श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विले-
पनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥ त्वाङ्गन्धर्व्वाऽअखनँस्त्वा-
मिन्द्रस्त्वाम्बृहस्पतिः । त्वामोषधेसोमोराजाविद्वान्यक्ष्मा- २४

मद दमुन्वयत ॥ ॐ भूर्भु० गन्धं समर्प० । अक्षताश्च सुरश्रेष्ठाः
२५ कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण प्र.प.
परमेश्वर ॥ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत । अस्तोषत
स्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ ॐ भूर्भु०
अक्षतान् समर्प० । माल्यादीनि सुगन्धीनि मालत्यादीनि
वै प्रभो । मयाऽऽहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥
३ ओषधीः प्रतिमोदध्वम्पुष्पवतीः प्रसूवरीः । अश्वाऽइवसजित्व- २५

ग्रह रीर्व्वीरुधः पारयिष्णवः । ॐभूर्भु० पुष्पमालां समर्प० । दूर्वा- प्र.प.
२६ ङ्कुरान्सुहरितानमृतान्मङ्गलप्रदान् । आनीतांस्तव पूजार्थं
गृहाण गणनायक ॥ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुष-
स्परि । एवानोदूर्व्वेप्रतनुसहस्रेणशतेनच ॥ ॐभूर्भु० गणेशाय
नमः दूर्वाङ्कुरान्समर्प० । नानापरिमलैर्द्रव्यैर्निर्मितं चूर्ण-
मुत्तमम् । अबीरनामकं चूर्णं गन्धं चारु प्रगृह्यताम् ॥ अहि-
रिवभोगैःपर्य्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः । हस्तघ्नो- २६

महइ विश्वांव्वयुनानिव्विद्वान्पुमान्पुमांꣳसम्परिपातुव्विश्वतः ॥ ॐ
२७ भूर्भु० नानापरिमलद्रव्याणि समर्प० । सिन्दूरं शोभनं रक्तं प्र.प.
सौभाग्यं सुखवर्द्धनम् । शुभदं कामदञ्चैव सिन्दूरं प्रतिगृह्य-
ताम् ॥ सिन्धोरिवप्पाद्ध्वुनेशूघनासोव्वातप्प्रामियꣳपतय-
न्तिसह्वाः । घृतस्युधराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मि-
भिःपिन्वमानः ॥ ॐभूर्भु० सिन्दूरं समर्प० । नैवेद्यं पुरतो
निधाय-वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः २७

ग्रह सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् । धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतं प्र.प.
२८ योऽस्मान्धूर्व्वतितन्धूर्व्वयंव्वयंधूर्व्वामः । देवानामसिव्वह्नितमꣳस-
स्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ ॐ भूर्भु० धूपं
समर्प० । साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं
गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ भक्त्या दीपं प्रय-
च्छामि देवाय परमात्मने । त्राहि मां निरयाद्घोराद्दीप-
ज्योतिर्नमोऽस्तु ते ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहासू- २८

ऽर्य्योज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्योव्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा । ज्ज्योतिः सूर्य्यः सूर्य्योज्ज्योतिः स्वाहा ॥ ॐ भूर्भु० दीपं समर्प० । हस्तौ प्रक्षाल्य-नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च पराङ्गतिम् ॥ शर्कराखण्डखाद्यानि दधि-क्षीरघृतानि च । आहारो भक्ष्यभोज्यञ्च नैवेद्यं प्रतिगृह्य-ताम् ॥ अन्नपतेऽन्नस्यनोदेह्यनमीवस्यंशुष्मिणः । प्रप्र- २९

दातारंन्तारिषुऽऊर्जंन्नोधेहिद्विपदेचतुंष्पदे ॥ ॐभूर्भु० नैवेद्यं समर्प०। नैवेद्यान्ते आचमनीयं सम० मध्येपानीयंसम० उत्तरापोशनं सम० । चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम् । करोद्वर्तनकं देव गृहाण परमेश्वर ॥ अंशुनांतेअंशुःपृच्यतांपरुंषः परुः । गन्धस्तेसोमंमवतुमदांयुरसोऽअच्युतः ॥ ॐभूर्भु० करोद्वर्तनार्थे गन्धानुलेपनं समर्प० । पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं ताम्बूलं प्रति-

मह गृह्यताम् । ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्च पु- प्र.५
३१ ष्पिणीः । बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥ ॐ भूर्भु
मुखशुद्ध्यर्थं ताम्बूलपत्रं पूगीफलं च समर्प० । इदं फलं
मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्ज-
न्मनि जन्मनि ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत । वस-
न्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मःशरद्धविः ॥ ॐ भूर्भु० ऋतुफ-
लानि समर्प० । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । ३१

महा अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ हिरण्यगर्ब्भः प्र.प.
३२ समवर्त्तताग्ग्रेभूतस्यजातःपतिरेकऽआसीत् । सदाधारपृ-
थिवीन्द्यामुतेमाङ्कस्म्मैदेवायहविषाविधेम ॥ ॐ भूर्भु०
कृतायाः पूजायाः साद्गुण्यार्थे दक्षिणाद्रव्यं समर्प० । कद-
लीगर्भसम्भूतं कर्पूरं तु प्रदीपितम् आरार्तिकमहं कुर्वे पश्य
मे वरदो भव ॥ आरात्त्रिपार्थिवꣳरजः पितुरप्प्रायिधामभिः ।
दिवःसदाꣳसिबृहतीवितिष्ठसऽआत्त्वेषंवर्त्ततेतमः ॥ इदꣳ ३२

मह हविश्प्रजनंनम्मेऽअस्तुदशंवीर७ँ सर्वगण७ँस्वस्तये । आत्म- प्र.प.
सनिंप्रजासनिंपशुसनिंलोकसन्यंभयसनिं । अग्निश्प्रजा-
२२ म्बहुलाम्मेंकरोत्वन्नम्पयोरेतोऽअस्म्मासुधत्त ॥ कर्पूरनीरा-
जनं समर्पं० । नानासुगन्धिपुष्पाणि ऋतुकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर ॥ ॐ यज्ञेनंयज्ञमं-
यजन्तदेवास्तानिधर्म्माणिप्रथमान्यांसन् । तेहनाकंम्महि-
मानं÷सचन्तयत्रपूर्वेसाद्ध्याश्सन्तिदेवाश् ॥ ॐराजाधिराजाय ३३

मह प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे । स मे कामा- प्र.प.
३४ न्कामकामाय मह्यं कामेश्वरो वै श्रवणो ददातु ॥ कुबेराय
वै श्रवणाय महाराजाय नमः । ॐ स्वस्ति ) साम्राज्यं
भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधि-
पत्यमयं समन्तपर्यायी स्यात्सार्वभौमस्सार्वायुष आन्तादा-
परार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराडिति तदप्येषश्लोको
ऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्याऽवसन् गृहे । आविक्षि ३५

मह तस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ ॐ विश्वतंश्चक्षु-
३५ रुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतंस्पात् । सम्बाहुभ्या
न्धमंतिसम्पतत्रैर्द्यावाभूमीजनयंन्देवऽएकं॑ ॥ गणेशा० मन्त्र-
पुष्पाञ्जलिं समर्प० । प्रदक्षिणा- पदे पदेभ्यः परिपूजकेभ्यः
सद्योऽश्वमेधादिफलं ददाति । तां सर्वपापक्षयहेतुभूतां प्रद-
क्षिणां ते परितः करोमि ॥ यानि कानि च पापानि ज्ञाता-
ज्ञातकृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिणपदे पदे ॥ ३५

ग्रह येतीर्थानिप्प्रचरन्तिसृकाहस्तानिषङ्गिणः। तेषांसहस्रयो- प्र.प.
२६ जनेवधन्वानितन्मसि ॥ गणेशा० प्रदक्षिणां समर्प०।
विशेषार्घं दद्यात्—मृन्मयादिपात्रे जल पुष्पदूर्वादिद्रव्यं
प्रक्षिप्य हस्ताभ्यां गृहीत्वा श्लोकान्पठेत्-ॐ रक्ष रक्ष गणा-
ध्यक्ष रक्ष त्रैलोक्यरक्षक। भक्तानामभयं कर्ता त्राता भव
भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो।
वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफला- २६

५६ र्घ्येण सफलोऽस्तु सदा मम। ॐ गणेशाम्बिकाभ्यां नमः विशे- प्र.१
२७ षार्घ्यं सम०। ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सक
लाय जगद्धिताय। नागाननाय श्रुतियज्ञविभूषिताय गौरीसु-
ताय गणनाथ नमो नमस्ते॥ भक्तार्तिनाशनपराय गणेश्वराय
सर्वेश्वराय शुभदाय सुरेश्वराय। विद्याधराय विकटाय च
वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते॥ नमस्ते ब्रह्म-
४ रूपाय विष्णुरूपाय ते नमः। नमस्ते रुद्ररूपाय करिरूपाय २७

 ते नमः ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्त- 
 प्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर नमस्तुभ्यं
सततं मोदकप्रिय । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥
त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति
फलप्रदेति । विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश
वरदो भव नित्यमेव ॥ गणेशपूजने कर्म यन्न्यूनमधिकं 

कृतम् । तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदा मम[१] । अनया पूजया गणेशाम्बिके प्रीयेतां न मम ।

---

(१) ॐ आतूनऽइन्द्र वृत्रहन्न स्माकमर्द्धमागहि । महान्महीभिरूतिभिः ॥ १ ॥ त्वमिन्द्रप्रतूर्तिष्वभिविश्वाऽअसिस्पृधः । अशस्तिहाजनिता विश्वतूरसित्वन्तूर्य्यतरुष्यतः ॥ २ ॥ अनुते शुष्मन्तुरयन्तमीयतुः क्षोणीशिशुन्नमातरा । विश्वास्तेस्पृधः श्नथयन्तमन्यवेवृत्रं यदिन्द्र तूर्व्वसि ॥ ३ ॥ यज्ञोदेवानाम्प्रत्येति सुम्नमादित्यासोभवतामृडयन्तः । आवोर्व्वाचीसुमतिर्व्ववृत्यादꣳहोश्चिद्याव्वरिवो वित्तरासत् ॥ ४ ॥ अदब्धेभिःसवितः पायुभिष्ट्वꣳ शिवेभिरद्यपरिपाहिनो गयम् । हिरण्यजिह्वः सुवितायनव्यसेरक्षामाकिर्नोऽअघशꣳस ऽईशत ॥ ५ ॥ प्रवी-रयाशुचयोदद्रिरेवामदुध्वर्युभिर्मधुमन्तः सुतासः । वहव्वायो नियुतो या ह्यच्छापिबा सुतस्यान्धसोमदाय ॥ ६ ॥ गावऽउपावतावतं मही-यज्ञस्य रप्सुदा । उभाकर्णा हिरण्यया ॥ ७ ॥ काव्ययोराजानेषुक्रत्वादक्षस्यदुरोणे । रिशादसासधस्थ आ ॥ ८ ॥

## ❋ स्वस्तिवाचनप्रयोगः ❋

मुहीद्यौः पृथिवीचनऽइमं युज्ञं मिमिक्षताम् । पिपृतान्नोभरीम-

मह भिः ॥ इति भूमिं स्पृशेत् । आपंधयुःसमंवदन्तुसोमेनसुह-
४० राज्ञा । यस्मैकृणोति ब्राह्मणस्तठे॰राजन्पारयामसि ॥ इति
तत्र प्रस्थपरिमितं सप्तधान्यं विकिरेत् । आजिघ्रकुलशंमु-
ह्यात्वांविशन्त्विन्दंवः । पुनरूर्ज्जानिवर्त्तस्वसानः सुहस्रंन्धु-
क्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ इति तत्र सुस-
ज्जितं कलशं संस्थापयेत् । वरुणस्योत्तम्भनमसिवरुणस्यस्क-
म्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यासिवरुणस्यऽऋतसदनम-

प.प

४०

सिव्वरुणस्यऽऋतुसदनमासीद ॥ इति तस्मिन् जलं पूरयेत् । 
त्वाङ्गन्धुर्वाऽअंखनँस्त्वामिन्द्रुस्त्वाम्बृहस्पतिः । त्वामोष-
धेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ इति मंत्रेण कलशे गन्धं
प्रक्षिपेत् ॥ याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुबभ्रूणां
मुहठं॰शतन्धामानिसप्तचं ॥ इति सर्वौषधीः निक्षिपेत् ।
काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि । एवानोदूर्वेप्रतनु
सहस्रेणशतेनच ॥ इति तत्र दूर्वाः प्रक्षिपेत् । अश्वत्थेवोनि- ४२

पदंनम्पर्णेवोवसतिष्कृता । गोभाजऽइत्किलासथयत्सनवथ-
पूरुषम् । इति पञ्च पल्लवान् प्रक्षिपेत् । स्योनापृथिविनोभ-
वान्नृक्षरानिवेशनी । यच्छानःशर्म्मसप्रथाः ॥ इति मन्त्रेण
सप्तमृदः प्रक्षिपेत् । याःफलिनीर्याऽअफलाऽअपुष्पायाश्च
पुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वंहसः ॥ इति
पूगीफलं प्रक्षिपेत् । परिवाजपतिःकविरग्निर्हव्यान्य-
क्रमीत् । दधद्रत्नानिदाशुष ॥ इति पञ्च रत्नानि प्रक्षिपेत् । हिर-

४६ ण्युगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् । सदा- प्र.प.
धारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ इति हिर-
ण्यं प्रक्षिपेत् । सुजातोज्योतिषासहशर्म्मवरूथमासदत्स्वः ।
वासोऽअग्नेविश्वरूपं सव्ययस्वविभावसो ॥ इति वस्त्रयुग्मेन
कलशं संवेष्टयेत् ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत । वस्नेव
विक्रीणावहाऽइषमूर्जशतक्रतो ॥ ति ताम्रादिपात्रे पूरित-
धान्यपूर्णपात्रं कलशोपरि निदध्यात् । ततः—याःफलिनी- ४२

मह याऽअफलाऽअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानो- प्र.प.
४४ मुञ्चन्त्वꣳहसः ॥ इति कलशोपरि स्वाभिमुखं रक्तवस्त्रा-
दिवेष्टितं नारिकेलफलं संस्थाप्य--तत्वायामिब्रह्मणावन्दमा-
नस्तदाशास्तेयजमानोहविर्भिः । अहेडमानोवरुणेहबोध्यु-
रुशꣳसमानऽआयुःप्रमोषीः ॥ इति तस्मिन्कलशे वरुणं
साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि ।
ॐ अप्पतये वरुणाय नमः--इत्यावाह्य तत्रैव देवता आवा- ४४

मह हयेत्--ॐकलाः हि देवानां दानवानां कलाः कलाः। सङ्गृह्य प्र.५.
४५. निर्मितो यस्मात्कलशस्तेन कथ्यते । कलशस्य मुखे विष्णुः
कण्ठे रुद्रः समाश्रितः। मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृ-
गणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा।
अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ॥ कावेरी कृष्ण-
वेणा च गङ्गा चैव महानदी । तापी गोदावरी चैव माहेन्द्री
नर्मदा तथा ॥ नदाश्च विविधा जाता नद्यः सर्वास्तथा ४५

पराः । पृथिव्यां यानि तीर्थानि कलशस्थानि तानि प्र.प.
वै ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आया-
न्तु मम शान्त्यर्थं दुरितक्षयकारिकाः ॥ ऋग्वेदोऽथ यजु-
र्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशन्तु
समाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी
तथा । आयान्तु मम शान्त्यर्थं दुरितक्षयकारिकाः ॥ ततः
मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंय - ४६

५६ ज्ञह्ऽसामिमन्दंधातु । विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ प्र.१.
४.७ इति प्रतिष्ठाप्य षोडशाभिरुपचारैः सम्पूज्य अनया पूजया
वरुणाद्यावाहितदेवताः प्रीयन्तां न मम इति ।

### ❋ अथ कलश प्रार्थना ❋

ॐ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा
कुम्भ विधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाःसर्वे
त्वयि स्थिता ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रति- ४८

ष्ठिताः। शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदि-
त्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः। त्वयि तिष्ठन्ति सर्वेऽपि
यतः कामफलप्रदः। त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलो-
द्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा। नमो नमस्ते
स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय। सुपाशहस्ताय
झषासनाय जलाधिनाथाय नमो नमस्ते॥ पाशपाणे नम-
स्तुभ्यं पद्मिनीजीवनायक। पुण्याहवाचनं यावत्तावत्त्वं

मह सन्निधो भव-इति। अवनिकृतजानुमण्डलः कमलमुकुलसदृ- प्र.प.
४६ शमञ्जलिं शिरस्याधाय, दक्षिणेन पाणिना सुवर्णपूर्णकलशं
धारयित्वा, स्वमूर्ध्ना संयोज्य, आशिषः प्रार्थयेत्-ॐ दीर्घा
[ नागा ] नद्यो गिरयस्त्रीणि विष्णुपदानि च। तेनायुःप्रमा-
णेन पुण्यं पुण्याहं दीर्घमायुरस्तु। अस्तु दीर्घमायुः-इति विप्राः
प्रति ब्रूयुः। ततः-त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः।
पृ. अतोधर्माणिधारयन्॥ तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घ- ४८

पह मायुरस्तु' इति यजमानो ब्रूयात् । अस्तु दीर्घमायुः-इति प्र.प.
५० विप्राःप्रतिब्रूयुः । इतिवारत्रयं पठेत् ॥ ॐ अपां मध्ये स्थिता
देवाः सर्वमप्सु प्रतिष्ठितम् । ब्राह्मणानां करे न्यस्ताः
शिवा आपो भवन्तु ते ॥ ॐ शिवा आपःसन्तु, इति विप्र-
हस्तेषु जलं दद्यात् । सन्तु शिवा आपः, इति ब्राह्मणाः
प्रतिवचनं दद्युः । ॐ लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।
सा मे वसतु वै नित्यं सौमनस्यं तथाऽस्तु नः ॥ ॐ सौम- ५०

प्रह नस्यमस्तु' इति पुष्पं दद्यात्। अस्तु सौमनस्यम्' इति प्र.प
विप्रा । ॐ अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् ।
५१ यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥ ॐ अक्षतञ्चारि-
ष्टञ्चास्तु' इत्यक्षतान् दद्यात्। अस्त्वक्षतमरिष्टञ्च' इति
द्विजाः । ॐ गन्धाः पान्तु' इति गन्धं दद्यात्। ॐ सुमाङ्ग-
ल्यञ्चास्तु' विप्राः प्रतिब्रूयुः-ॐ पुनरक्षताः पान्तु' इत्यक्ष-
तान् दद्यात् । विप्रोक्तिः-आयुष्यमस्तु । ॐ पुष्पाणि पान्तु ५६

ग्रह इति पुष्पाणि दद्यात् । सौश्रियमस्तु' विप्राः । ॐ सफल प्र.प.
५२ ताम्बूलानि पान्तु'इति ताम्बूलानि दद्यात् । ॐ ऐश्वर्यमस्तु'
द्विजाः । ॐ दक्षिणाः पान्तु-इति दक्षिणां दद्यात् । बहु-
देयञ्चास्तु' विप्राः । ॐ पुनरत्रापः पान्तु-इति जलं दद्यात् ।
द्विजोक्तिः-स्वर्चितमस्तु । ॐ दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः
श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु'
इति विप्रान् प्रार्थयेत् । 'अस्तु' इति द्विजाः प्रतिब्रूयुः । ततः ५२

मह ओ३म् यत्कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्र.प.
५३ प्रवर्तन्ते तमहमोङ्कारमादिङ्कृत्वा ऋग्यजुः सामाथर्वाशीर्व-
चनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं
वाचयिष्ये' इति वदेत्। ओ३म् वाच्यताम्' इति विप्राः प्रति-
ब्रूयुः। द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्ट्रादृतुभिरि-
ष्यत ॥१॥ सविता त्वा सवानां सुवतामग्निर्गृहपतीना सोमो
वनस्पतीनाम्। बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो ५३

मित्रःसत्योव्वरुणोधर्म्मपतीनाम् ॥२॥ नतद्रक्षाꣳसिनपिशा-
 चास्तंरन्तिदेवानामोजः प्रथमजꣳह्येतत् । सोबिभर्तिदाक्षा-
यणꣳ हिरण्यꣳ सदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुते
दीर्घमायुः ॥३॥ उच्चातेजातमन्धसोदिविसद्भूम्याददे । उग्रꣳ
शर्म्ममहिश्रवः ॥ ४ ॥ उपास्मैगायतानरःपवमानायेन्दवे ।
अभिदेवाँ ॥२॥ऽइयक्षते ॥५॥ इति मन्त्रान् पठेयुः । ततः
व्रतजपनियमतपःस्वाध्यायक्रतुशमदमदयादानविशिष्टानां 

५६ सर्वेषां ब्राह्मणानां मनः समाधीयताम् इति विप्रान् प्रार्थयेत्। प्र.प..
५५ ॐ समाहितमनसः स्मः’ इति द्विजाः । ॐप्रसीदन्तु भवन्तः’
इति वदेत् । प्रसन्नाः स्मः’ इति विप्राः प्रतिब्रूयुः। ॐशान्ति-
रस्तु । ॐपुष्टिरस्तु । ॐतुष्टिरस्तु। ॐवृद्धिरस्तु।ॐअवि-
घ्नमस्तु । ॐआयुष्यमस्तु । ॐआरोग्यमस्तु । ॐशिव-
मस्तु । ॐशिवङ्कर्मास्तु । ॐकर्मसमृद्धिरस्तु । ॐधर्म-
समृद्धिरस्तु । ॐवेदसमृद्धिरस्तु। ॐशास्त्रसमृद्धिरस्तु । ॐ ५.१

प्रह धनधान्यसमृद्धिरस्तु । ॐपुत्रपौत्रसमृद्धिरस्तु । ॐइष्टसम्प- १.५.
५६ दस्तु । ततः पात्राद्बहिरुत्तरतः पात्रान्तरे भूमौ वा अक्ष-
तान् क्षिपेद्वाक्यद्वयेन--ॐअरिष्टनिरसनमस्तु । ॐयत्पापं
रोगोऽशुभमकल्याणं तद् प्रतिहतमस्तु । अन्तः--ॐयच्छ्रे-
यस्तदस्तु । ॐउत्तरे कर्मणि निर्विघ्नमस्तु । ॐउत्तरोत्तर-
महरहरभिवृद्धिरस्तु । ॐउत्तरोत्तराः क्रियाः शुभाः शोभनाः
सम्पद्यन्ताम् । ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु । ५६

मह. ॐतिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । ॐ
५७ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदेवते प्रीयेताम् । प्र.प.
ॐदुर्गापाञ्चाल्यौ प्रीयेताम् । ॐअग्निपुरोगा विश्वेदेवाः प्रीय-
न्ताम् । ॐइन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम् । ॐब्रह्मपुरोगाः
सर्वे वेदाः प्रीयन्ताम् । ॐविष्णुपुरोगाः सर्वे देवाः प्रीय-
न्ताम् । ॐमाहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । ॐव-
सिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । ॐअरुधन्तीपुरोगा एक- ५७

मह पत्न्यः प्रीयन्ताम् । ॐ ब्रह्म च ब्रह्मणाश्च प्रीयन्ताम् । ॐ प्र.प.
पृ.८ श्रीसरस्वत्यौ प्रीयेताम् । ॐ श्रद्धामेधे प्रीयेताम् । ॐ भगवती
कात्यायनी प्रीयताम् । ॐ भगवती माहेश्वरी प्रीयताम् ।
ॐ भगवती पुष्टिकरी प्रीयताम् । ॐ भगवती तुष्टिकरी प्रीय-
ताम् । ॐ भगवतीऋद्धिकरी प्रीयताम् । ॐ भगवती वृद्धिकरी
प्रीयताम् । ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम् । ॐ सर्वाः-
कुलदेवताः प्रीयन्ताम् । ॐ सर्वाः ग्रामदेवताः प्रीयन्ताम् । पृ.८

प्रह ॐ सर्वाः इष्टदेवताः प्रीयन्ताम् । बहिः-ॐ हताश्च ब्रह्मद्विषः।
५६ ॐ हताश्च परिपन्थिनः। ॐ हताश्च विघ्नकर्त्तारः। ॐ शत्रवः प्र.प.
पराभवं यान्तु। ॐ शाम्यन्तु घोराणि। ॐ शाम्यन्तु पापानि।
ॐ शाम्यन्त्वीतयः। ॐ शाम्यन्तूपद्रवाः । अन्तः-ॐ शुभानि
वर्द्धन्ताम् । ॐ शिवा आपः सन्तु । ॐ शिवा ऋतवः सन्तु ।
ॐ शिवा अग्नयः सन्तु। ॐ शिवा आहुतयः सन्तु। ॐ शिवा
वनस्पतयः सन्तु। ॐ शिवा ओषधयः सन्तु। ॐ शिवा ५.६

मह अतिथयः सन्तु। ॐ अहोरात्रे शिवे स्याताम्। ॐ निकामेनि- प्र.प.
६० कामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयः पच्यन्तांयोग
क्षेमोनःकल्पताम्। ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहु-
केतुसोमसहिता आदित्यपुरोगाः सर्वेग्रहाः प्रीयन्ताम्। ॐ भ-
गवान्नारायणः प्रीयताम्। ॐ भगवान्पर्जन्यः प्रीयताम्। ॐ
भगवान्स्वामी महासेनः प्रीयताम्। ॐ पुरोनुवाक्यया यत्पु-
ण्यं तदस्तु। ॐ याज्यया यत्पुण्यं तदस्तु ॐ वषट्कारेण ६०

यत्पुण्यं तदस्तु । ॐ प्रातः सूर्योदये यत्पुण्यं तदस्तु । ततः
ॐ एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये, इति प्रार्थयेत् ।
ॐ वाच्यताम् इति विप्राः ब्रूयुः । ॐ ब्राह्मं पुण्यमहर्यच्च सृष्ट्यु-
त्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥
भो ! ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाण-
ग्रहशान्तिकर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति त्रिर्ब्रूयात् ।
ॐ पुण्याहम् इति तथैव त्रिर्विप्राः ब्रूयुः । ॐ पुनन्तुमादेव-

मह जुनाःपुनन्तुमनसाधियः । पुनन्तुव्विश्वाभुतानिजातवेदः प्र.प.
६२ पुनीहिमा ॥ इति पठेयुः । ॐपृथिव्यामुद्धृतायान्तु यत्क-
ल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुव-
न्तु नः ॥ भो ! ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे
करिष्यमाणग्रहशान्तिकर्मणः कल्याणं भवन्तो ब्रुवन्तु इति
त्रिर्ब्रूयात् । ॐकल्याणम् इति तथैव त्रिर्विप्राः ब्रूयुः ।
ॐ यथेमांव्वाचङ्कल्याणीमावदानिजनेभ्यः । ब्रह्मराजन्या- ६२

मह भ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवाना-
६२ न्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृध्यतामुप मादो न-
मतु ॥ इति पठेयुः । ॐ सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः
कृता । सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ भो !
ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाण-
गृहशान्तिकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु इति त्रिर्ब्रूयात् । ॐ
कर्म ऋध्यताम् इति त्रिर्विप्राः ब्रूयुः । ॐ सत्रस्यऽऋद्धिरस्यगन्म ६२

ज्योतिरमृतांऽअभूम । दिवंपृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्योतिः ॥ इति पठेयुः । ॐस्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा । विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ भो ! ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य करिष्यमाणग्रहशान्तिकर्मणे स्वस्ति भवन्तो ब्रुवन्तु-इति त्रिर्ब्रूयात् । 'ॐआयुष्मते स्वस्ति-इति त्रिर्विप्रास्तथैव ब्रूयुः । ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ।

यह स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ इति म.प.
६५ पठेयुः । ॐ समुद्रमथनाज्जाताजगदानन्दकारिका । हरि-
प्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ! ब्राह्मणाः
मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणगृहशान्ति-
कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु इति त्रिर्ब्रूयात् । ॐ अ-
स्तु श्रीः-इति त्रिर्विप्रास्तथैव ब्रूयुः । ॐ श्रीश्चतेलक्ष्मी-
श्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् । इष्णन्- ६६

अह न्निषाणामुम्मंऽइषाणसर्व्वंलोकम्मंऽइषाण ॥ इति पठेयुः । ॐ प्र.प.
मृकण्डसूनोरायुर्यद् ध्रुवलोमशयोस्तथा । आयुषा तेन
६६ संयुक्ता जीवेम शरदः शतम् ॥ ॐ शतञ्जीवन्तु भवन्तः
इति ब्राह्मणाः ब्रूयुः । ॐशतमिन्नुशरदोऽअन्तिदेवायत्रान-
श्चक्राजरसंन्तनूनांम् । पुत्रासोयत्रंपितरोभवंन्तिमानोमु-
ध्यारीरिषतायुर्गन्तोंः॥ इति पठेयुः । ॐशिवगौरीविवाहे या
या श्रीरामे नृपात्मजे । धनदस्य गृहे या श्रीरस्माकं सास्तु ६६

सद्मानि। ॐ अस्तु श्रीः--इति विप्राः । ॐ मनसः काममाकूतिं वा-
चः सत्यमशीय। पशूनाꣳरूपमन्नस्य रसो यशः श्रीः श्रयताम्म-
यि स्वाहा ॥ इति पठेयुः । ॐ प्रजापतिर्लोकपालो धाता ब्रह्मा
च देवराट् । भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वतः ॥
ॐ भगवान्प्रजापतिः प्रीयताम् इति ब्राह्मणाः । अत्र कलशे
एकमाचमनीयं जलं क्षिपेत् । ॐ प्रजापते न त्वदेतान्यन्यो
विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु वय-

म॰ह॰ ६८

मृमुष्यंपितासावृस्यपिताव्वृयॅरु स्याम्रुपतयोरयीणाॅरु स्वाहा ॥ प्र.प.
इति पठेयुः । ॐआयुष्मते स्वस्तिमते यजमानाय दाशुषे ।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ॥ ॐआयुष्मते स्व-
स्ति--इति विप्राः ब्रूयुः । ॐप्रतिपन्थामपद्महिस्वस्तिगामनेह
सम् । येनुव्विश्वाःपरिद्विषोव्वृणक्तिव्विन्दतेव्वसु ॥ ॐस्वस्तिवाच-
नसमृद्धिरस्तु--इति च ब्रूयुः । कर्ता-अस्मिन्पुण्याहवाचने
न्यूनातिरिक्तो यो विधिरुपविष्टब्राह्मणानां वचनात् श्रीमहा- ६८

गणपतिप्रसादाच्च परिपूर्णोऽस्तु । ॐअस्तु परिपूर्णः' इति द्विजाः । दक्षिणादानम्--कृतस्य दानखण्डोक्तपुण्याहवाचनकर्मणः साङ्गतासिध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च स्वस्तिवाचकेभ्यो ब्राह्मणेभ्यो मनसोद्दिष्टां दक्षिणां विभज्य दातुमहमुत्सृज्ये' इति दद्यात् । 'अस्तु' इति द्विजाः ब्रूयुः । ततोऽविधुरा ब्राह्मणाः पल्लवदर्भपाणयः कलशोदकमेकस्मिन्पात्रे पात्रान्तरे प्रक्षिप्तं च जलं गृहीत्वा दूर्वापल्लव-

सहितेन तेनोदकेन उदङ्मुखास्तिष्ठन्त उपविष्टा वा वाम-
भागस्थितं पत्नीसपरिवारं यजमानमभिषिञ्चेयुर्वक्ष्यमाण-
मन्त्रैः—ॐ देवस्यंत्वासवितुःप्प्रंसुवेऽश्विनोर्बाहुब्भ्याम्पूष्णोह-
स्ताब्भ्याम् । सरंस्वत्यैव्वाचोयुन्तुर्युन्त्रियेदधामिबृहस्पते-
ष्ट्वासाम्म्राज्ज्येनाभिषिञ्चाम्म्यसौ ॥१॥ देवस्यंत्वासवितुःप्प्रंसु-
वेऽश्विनोर्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् । सरंस्वत्यैव्वाचोयु-
न्तुर्युन्त्रेणाग्नेःसाम्म्राज्ज्येनाभिषिञ्चामि ॥ २ ॥ देवस्यंत्वास-

प्रह वितुःप्प्रसवेऽश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्ताभ्याम् । अश्विनो- प्र.प.
भैषंज्ज्येनतेजंसेब्रह्मवर्च्चसायाभिषिञ्चामिसरंस्वत्यैभैषंज्ज्येन--
७१ वीर्य्यायान्नाद्यांयाभिषिञ्चामीन्द्रंस्येन्द्रियेणबलांयश्रियैयशं-
सेऽभिषिञ्चामि॥३॥आपोहिष्ठामंयोभुवस्तानंऽऊर्ज्जेदंधातन।
महेरणांयचक्षंसे॥४॥योवंःशिवतंमोरसस्तस्यंभाजयतेहनंः।
उशतीरिवमातरंः ॥५॥ तस्मांऽअरंङ्गमामवोयस्यक्षयांयजि-
न्न्वंथ। आपोंजनयंथाचनः ॥६॥ पुनन्तुमापितरंःसोम्म्यासंः ७६

मह पुनन्तुंमापितामुहाः पुनन्तुप्प्रपितामहाः पुवित्रेणशुतायुंषा । प्र.प.

७२ पुनन्तुंमापितामुहाः पुनन्तुप्प्रपितामहाः । पुवित्रेणशुतायुंषा

विश्श्वुमायुर्व्यश्श्नवै ॥ ७ ॥ अग्नुऽआयूंᳫंषिपवसुऽआसुवो-

र्ज्जुमिषंञ्चनः । आरेबांधस्वदुच्छुनाम् ॥८॥ पुनन्तुंमादेवजु-

नाःपुनन्तुमनंसाधियंः । पुनन्तुव्विश्श्वांभूतानि्जातंवेदःपु-

नीहिमां ॥ ९ ॥ पुवित्रेणपुनीहिमाशुक्रेणदेवुदीद्यंत् । अग्ने्

क्रत्वाक्रतूँ १ रनुं ॥१०॥ यत्तेपुवित्रंमुर्चिष्ष्यग्नेव्वितंतमन्तरा । ८७

मह ब्रह्मुतेनंपुनातुमा ॥११॥ पवंमानुःसोऽअुद्यनंःपुवित्रेणुविचं- प्र.१.
र्षणिः । यःपोतासपुंनातुमा ॥ १२ ॥ उुभाभ्यांन्देवसवितः
५३ पुवित्रेणसुवेनंच । माम्पुंनीहिविश्वतः ॥१३॥ वैश्वदेवीपुंनुती
देव्यागाद्यस्यांमिमाबुह्व्यस्तुन्वोवीतपृष्ठाः । तयामदंतःसधु-
मादेषुवयंस्यांमुपतंयोरयीणाम् ॥ १४ ॥ कौसिकतुमोसि
कस्मैत्वाकायंत्वा । सुश्लोकुसुमङ्गलुसत्यंराजन् ॥ १५ ॥
७ शिरोंमेश्रीर्यशोमुखन्त्विषिः केशाश्चश्मश्रूंणि । राजा ७२

मह मेप्राणोऽअमृतꣳसम्म्राट्चक्षुर्व्विराट्श्रोत्रम् ॥ १६ ॥ जिह्वा- प्र. प.
७४ मेभद्रंवाङ्महोमनोमन्न्युःस्वराड्भामः । मोदाꣳप्रमोदाऽ-
अङ्गुलीरङ्गानिमित्रम्मेसहः ॥ १७ ॥ बाहूमेबलमिन्द्रियꣳ
हस्तौमेकर्म्मवीर्य्यम् । आत्माक्षत्रमुरोमम ॥१८॥ पृष्टीर्म्मे
राष्ट्रमुदरमꣳसौग्ग्रीवाश्चश्रोणी । ऊरूऽअरत्नीजानुनीव्विशो
मेङ्गानिसर्व्वतः ॥१९॥ नाभिर्म्मेचित्तंव्विज्ञानम्पायुर्म्मेपचिति-
र्भसत् । आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः । जङ्घा- ७४

अ२ भ्याम्पुद्भ्यान्धर्मौस्मिन्विशिराजाप्प्रतिष्ठितः ॥२०॥ प्प्रति प्र प:
७५ क्षुत्रेप्प्रतितिष्ठामिराष्ट्रेप्प्रत्यश्वेषुप्प्रतितिष्ठामिगोषु । प्प्रत्यङ्गे-
षुप्प्रतितिष्ठाम्यात्मन्प्प्रतिप्प्राणेषुप्प्रतितिष्ठामिपुष्टेप्प्रतिद्या--
वापृथिव्योःप्प्रतितिष्ठामियज्ञे ॥२१॥ त्र्यादेवाऽएकादशत्त्रय-
स्त्रिꣳशाःसुराधसः । बृहस्पतिपुरोहितादेवस्यसवितुःसवे ।
देवादेवैरवन्तुमा ॥ २२ ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयैस्तृ-
तीयाःसत्येनसत्यंय्यज्ञेनयज्ञोयजुर्भिर्य्यजूꣳषिसामभिःसा- ७५

माँम्नस्य॒ग्भिर्ऋचं॑ पु॒रोनुवा॒क्या॒भिः पु॒रोनुवा॒क्या॒याज्या॒भि-
र्या॒ज्या॒भिर्वषट्का॒रैर्वषट्कारा॒ऽआहु॑तिभि॒राहु॑तयो मे॒ कामा॒न्त्स-
मर्द्धयन्तु॒ भूः॒ स्वाहा॑ ॥ २३ ॥ ॐअमृताभिषेकोऽस्तु' इति
वदेयुः। 'तथास्तु' इति विप्राः। ततः—कृतस्याभिषेककर्मणः
समृद्ध्यर्थं दक्षिणां दातुमहमुत्सृज्ये' इति दद्यात्। पत्नीं च
सकृदाचम्य दक्षिणत उपविशेदिति ।

मह ## * अविघ्नपूजनम् * प.प.

७७ कर्ता अस्मिन् कर्मणि षड्विनायकादीनां स्थापनं पूजनं च करिष्ये' इति सङ्कल्प्य हस्ते अरुणाक्षतान् गृहीत्वा आवाहयेत्--ॐ मोदाय० मोदमावा०। ॐ प्रमोदाय० प्रमोदमा०। ॐ सुमुखाय० सुमुखमा०। ॐ दुर्मुखाय० दुर्मुखमा०। ॐ अविघ्नाय० अविघ्नमा०। ॐ विघ्नहर्त्रे० विघ्नहर्तारमा०। इति संस्थाप्य पूजयेदिति। ७८

---

१—मोदश्चैव प्रमादश्च सुमुखो दुर्मुखस्तथा। अविघ्नो विघ्नहर्ता च षडेते विघ्ननायकाः ॥

## ❋ मण्डपदेवताप्रतिष्ठा ❋

'करिष्यमाणाङ्गत्वेन मण्डपदेवताप्रतिष्ठां करिष्ये' इति सङ्कल्प्य ॐ देवस्यंत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णो-हस्ताभ्याम् इत्याभ्रिं गृहीत्वा ॐ इदमहꣳ रक्षसाङ्ग्रीवाऽ-अपिकृन्तामि॥ इत्यवटं गर्तं परिकल्प्य ॐ मावोरिषत्खनि-तायंस्मैचाहङ्खनामिवः। द्विपाच्चतुष्पादस्माकꣳसर्वमस्त्व-नातुरम्॥ इति खनित्वा ॐ सिञ्चन्तिपरिषिञ्चन्त्युत्सिञ्चन्ति

पुनन्तिच। सुरांयैबभ्रुमदेंकिन्त्वोब्वदतिकिन्त्वः॥ इति तस्मि- प्र.प.
अ६ न्नवटे अप आसिञ्च्य ॐ यवोसियुवयास्मद्द्वेषोयुवयारातीः।
७६ इति यवान् प्रक्षिप्य ॐ काण्डात्काण्डादिति दूर्वाङ्कुरान्प्रक्षि-
प्य ॐ दधिक्राब्णोऽअकारिषमिति दधि प्रक्षिप्य ॐ
याः फलिनीर्या' इति फलं दद्यात्। ॐ हिरण्यगर्भः सम् इति
हिरण्यं गर्ते प्रक्षिप्य ॐ उच्छ्रयस्ववनस्पतऽऊर्ध्वोमांपाह्यंह-
हंसऽआस्ययज्ञस्योदृचः॥ इतिरक्तसूत्रपरिवेष्टितमदनफलम- ७६

न्वितस्तम्भोत्थापनं कृत्वा ॐऊर्ध्वऽऊषुणंऽऊतयेतिष्ठादेवोन
संविता।ऊर्द्ध्वोवाजंस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे॥
इति मन्त्रेणावटे रोपयेत्। ॐस्थिरोभववीड्वङ्गऽआशुर्भववा-
ज्यर्वन्। पृथुर्भवसुखदस्त्वमग्नेःपुरीषवाहंणः॥ इत्यवटे मृत्ति-
कया समन्ततो स्थिरी कुर्यात्। ततः—सर्वेषु स्तम्भेषु रोपण-
क्रमेणैकैकं देवमावाहयेत्। तद्यथा—ॐनन्दिन्यै नमः नन्दि-
नीमा०। ॐनलिन्यै० नलिनीमा०। ॐमैत्रायै० मैत्रा०

ॐउमायै० उमा० । ॐपशुवर्द्धिन्यै० पशुवर्द्धिनी० । इत्या- 
वाह्य–ॐमनोजूतिरिति मन्त्रेण प्रतिष्ठाप्य लब्धोपचारैः पूजयेदिति ।

### ❋ अथ षोडशमातृकापूजनम् ❋

ॐ गुणानांन्त्वागुणपतिꣳहवामहेप्रियाणांन्त्वाप्रियपतिꣳहवामहेनिधीनान्त्वांनिधिपतिꣳहवामहेव्वसोमम । आहमंजानिगर्ब्भधमात्वमंजासिगर्ब्भधम् ॥ गणपतये० गणपति-

मा० ॥ १ ॥ ॐआयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पित-
रञ्चप्रयन्त्स्वः ॥ गौर्यै० गौरीमा० ॥२॥ ॐहिरण्यरूपाऽउ-
षसोव्विरोकऽउभाविन्द्राऽउदिथः सूर्य्यश्च । आरोहतंव्वरुणमि-
त्रगर्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्रोसिव्वरुणोसि ॥पद्मायै०
पद्मामा० ॥ ३ ॥ ॐनिवेशनः सङ्गमनोव्वसूनांव्विश्वारूपाभि-
चष्टेशचीभिः । देवऽइवसवितासत्यधर्म्मेन्द्रोनतस्थौसमरे
पथीनाम् ॥ शच्यै० शचीमा० ॥४॥ ॐमेधाम्मेव्वरुणोददातु

मह मेधामग्निःप्रजापतिः। मेधामिन्द्रश्चव्वायुश्चमेधान्धाताददातु
८३ मेस्वाहा ॥ मेधायै० मेधामा० ॥५॥ ॐसवितात्त्वासवानांꣳ ८५
सुवतामग्निर्गृहपतीनाꣳसोमोव्वनस्पतीनाम् । बृहस्पतिर्व्वा-
चऽइन्द्रोज्यैष्ठ्यायरुद्रः पशुभ्योमित्रःसत्योव्वरुणोधर्म्मपती-
नाम्॥ सावित्र्यै० सावित्रीमा० ॥६॥ ॐव्विज्यन्धनुः कपर्दि-
नोव्विशल्योबाणवाँ२॥उत। अनेशन्नस्ययाऽइषवऽआभुरस्य
निषङ्गधिः ॥ विजयायै० विजया० ॥७॥ ॐबह्वीनाम्पिता ८२

बहुरंस्यपुत्रश्श्रिश्श्राकृंणोतिसमंनावुगत्यं। इषुधिःसङ्काःपृतंना-
श्श्रुसर्वाः÷पृष्ठेनिनंद्धोजयतिप्प्रसूतः॥ जयायै० जयामा०॥८॥
ॐइन्द्रंऽआसान्नेताबृहस्पतिर्द्दक्षिणायुज्ञःपुरएंतुसोमंः÷। देवु-
सेनानांमभिभञ्जतीनाञ्जयंन्तीनाम्मुरुतोंयुन्त्वग्ग्रंम्॥ देवसे-
नायै० देवसेनामा०॥९॥ ॐपितृब्भ्यः÷स्वधायिब्भ्यः÷स्वधा-
नमः÷पितामहेब्भ्यः÷स्वधायिब्भ्यः÷ स्वधानमः प्प्रपितामहे-
ब्भ्यःस्वधायिब्भ्यः÷स्वधानमः÷। अक्षन्पितरोमीमदन्तपित-

रोतीतृपन्तापितरःपितरःशुन्धध्वम्॥ स्वधायै० स्वधामा०। ० ।
ॐस्वाहाप्राणेभ्युःसाधिपतिकेभ्यः। पृथिव्यैस्वाहाग्नयेस्वा-
हान्तरिक्षायुस्वाहावायवेस्वाहा। दिवेस्वाहासूर्य्यायुस्वाहा॥
स्वाहायै० स्वाहामा० ॥ ११ ॥ ॐआपोऽअस्मान्मातरः
शन्धयन्तुघृतेननोघृतप्वःपुनन्तु। विश्वठंहिरिप्रम्प्रुवहन्ति
देवीरुदिदाभ्युःशुचिरापूतऽएमि। दीक्षातपसोस्तनूरसिता-
न्त्वाशिवाठंशग्मामपरिदधेभद्रंवर्णपुष्यन्॥ मातृभ्यो० मा-
तरा० ॥१२॥ ॐरयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमे

८६ प्रभुचंमेपूर्णञ्चंमेपूर्णतरञ्चमेकुयंवञ्चमेक्षितञ्चमेन्नंञ्चमेक्षुच्चमेसु-
ज्ञेनंकल्पन्ताम् ॥ लोकमातृभ्यो० लोकमातृरा०॥१३॥ ॐयत्प्र-
ज्ञानंमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु । यस्मान्नऽऋ-
तेकिञ्चनकर्मक्रियतेतन्मेमनः शिवसंङ्कल्पमस्तु ॥ धृत्यै०
धृतिमा० ॥१४॥ ॐत्र्यंम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ।
उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ पुष्ट्यै० पुष्टि-
मा० ॥ १५ ॥ ॐअङ्गान्यात्मन्भिषजातदश्विनात्मानमङ्गैः
समंधात्सरस्वती । इन्द्रस्यरूपꣳ शतमानमायुश्चन्द्रेणज्ज्यो-

तिरमृतन्दधाना॥ तुष्टयै० तुष्टिमा० ॥१६॥ ॐप्राणायस्वाहा
पानायस्वाहा व्यानायस्वाहा चक्षुषेस्वाहा श्रोत्रायस्वाहा वाचे
स्वाहा मनसेस्वाहा॥ आत्मनः कुलदेवतायै न० आत्मनः कुल-
देवतामा० ॥१७॥ ततः--ॐमनोजूतिरिति प्रतिष्ठाप्य षोडश-
भिरुपचारैरर्चनं समाप्य ॐआयुरारोग्यमैश्वर्यं ददध्वं मातरो
मम। निर्विघ्नं सर्वकार्येषु कुरुध्वं सगणाधिपाः॥ इति वदेत्।

## ❋ अथ वसोर्द्धारापूजनम् ❋

कर्ता—सप्तबिन्दून् क्रमेण प्रादेशमात्रस्थले निर्माय अध-

ग्रह स्तेनेषु सप्तसु बिन्दुषु घृतादिना सप्तधारा उदक्संस्थाः प्रादे- प्र.प.

८८ शमात्रीः कुर्यात् । ॐवसोःपवित्रमसिशतधारंवसोःपवित्र-

मसिसहस्रधारम् । देवस्त्वासवितापुनातुवसोःपवित्रेणशत-

धारेणसुप्वाकामधुक्षः ॥ इति मन्त्रेण गुडादिना मिथः श्लिष्टाः

कुर्यात् । ततस्तेषु सप्तसु बिन्दुषु क्रमेण देवता आवाहयेत्—

ॐमनसःकाममाकूतिंवाचःसत्यमशीय । पशूनाꣳरूपम-

न्नस्यरसोयशःश्रीःश्रयतांमयिस्वाहा ॥ श्रियै० श्रियमा० ॥१॥

ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ

व्यात्तम् । इष्णन्निषाणामुम्मंऽइषाणसर्व्वलोकम्मंऽइषाण ॥

लक्ष्म्यै० लक्ष्मीमा० ॥२॥ ॐभद्रङ्कर्णेभिः शृणुयामदेवाभद्र-

म्पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्य-

शेमहिदेवहितंयदायुः ॥ धृत्यै० धृतिमा० ॥३॥ ॐमेधाम्मे

व्वरुणोददातुमेधामग्निःप्रजापतिः । मेधामिन्द्रश्चवायुश्चमे-

धान्धाताददातुमेस्वाहा ॥ मेधायै० मेधामावा० ॥४॥ ॐप्राणा-

यस्वाहापानायस्वाहाव्यानायस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वा-

हाव्वाचेस्वाहामनसेस्वाहा ॥ स्वाहायै० स्वाहामा० ॥५॥ ॐ

आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः। पितरञ्च प्रयन्त्स्वः॥

प्रज्ञायै० प्रज्ञामा० ॥६॥ ॐ पावकानः सरस्वती वाजेभिर्वाजि-

नीवती। यज्ञं वष्टु धियावसुः॥ सरस्वत्यै० सरस्वतीमा० ॥७॥

ततः ॐ मनोजूतिरिति प्रतिष्ठाप्य लब्धोपचारैरर्चनं समाप्य

प्रार्थयेत्--यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः। कुर्वन्तु

कार्यमखिलं निर्विघ्नेन क्रतूद्भवम्॥ इति प्रार्थ्य--अनया पूजया

वसोर्द्धारादेवताः प्रीयन्तामिति।

म्ह

## * अथायुष्यमन्त्रजपः *

भ.प.

६१ ॐआयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् । इदꣳहिरण्यंव-
र्चस्वज्जैत्रायाविशतादुमाम् ॥१॥ नतद्रक्षाꣳसिनपिशाचास्त-
रन्तिदेवानामोजः प्रथमजꣳह्येतत् । योबिभर्तिदाक्षायणꣳहि
रण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥२॥
यदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः । त-
न्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ ३ ॥ ६१

मह ६२

# ❋ अथ नान्दीश्राद्धप्रयोगः ❋

कर्ता--कुशाद्यासने प्राङ्मुख उपविश्य ॐसत्यवसुसं-
ज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यं
पादावनेजनं पादप्रक्षालनं वृद्धिः । ॐमातृपितामहीप्रपि-
तामह्यो नान्दीमुख्यः भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं
पादप्रक्षालनं वृद्धिः । ॐपितृपितामहप्रपितामहाः नान्दी-
मुखाः भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं
वृद्धिः । ॐमातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाः ६२

मह नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षा- प्र.प.
६३ लनं वृद्धिः । इत्युक्त्वा सर्वत्र पात्रे सकुशयवाक्षतं जलं क्षिपेत् ।
आसनदानम्--ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इमे आसने वो नमः। ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः इमे आसने वो नमः। ॐ पितृपिता-महप्रपितामहाः नान्दीमुखाः भूर्भुवः स्वः इमे आसने वो नमः। ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दी-मुखाः भूर्भुवः स्वः इमे आसने वो नमः। इत्यासनानि दद्यात् । ६३

## ❋ अथ गन्धादिदानम् ❋

अत्रावःपान्तु। इमे वाससी। सुवाससी इमानि। यज्ञोपवीतानि सुयज्ञोपवीतानि। अयं वो गन्धः सुगन्धः। इमे अक्षताः स्वक्षताः। इमानि पुष्पाणि सुपुष्पाणि। अयं वो धूपः सुधूपः। अयं वो दीपः सुदीपः। इदं नैवेद्यं सुनैवेद्यम्। इमानि ऋतुफलानि सुऋतुफलानि। इदं ताम्बूलम् सुताम्बूलम्। इदं पूगीफलं सुपूगीफलम्। ॐसत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा। सम्पद्यतां वृद्धिः। ॐमातृपितामही-

ग्रह प्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा प्र.प.
९५ सम्पद्यतां वृद्धिः। ॐपितृपितामहप्रपितामहाः नान्दीमुखाः
भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ
मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः
भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। इति
गन्धादि दत्वा, भोजननिष्क्रयं दद्यात्—ॐसत्यवसुसंज्ञकाः
विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजन-
पर्याप्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां ९५

वृद्धिः । ॐमातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः
स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यम-
मृतरूपेण स्वाहा सम्पद्यतां वृद्धिः । ॐपितृपितामहप्रपिता-
महाः नान्दीमुखाः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्या-
प्तामान्ननिष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः।
ॐमातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दी-
मुखाः भर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननि-
ष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः । ततः

८६ सक्षीरयवकुशजलदानम्—ॐसत्यवसुसंज्ञकाः विश्वेदेवाः ना- प्र.प.
६७ न्दीमुखाः प्रीयन्ताम्। ॐमातृपितामहप्रपितामहाः नान्दी-
मुखाः प्रीयन्ताम्। ॐपितृपितामहप्रपितामहाः नान्दी-
मुखाः प्रीयन्ताम्। ॐमातामहप्रमातामहवृद्धप्रमातामहाः
सपत्नीकाः नान्दीमुखाः प्रीयन्ताम्। ततः—प्रार्थयेत्—ॐ
गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु-अन्नं च नो बहु
९ भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचि- ६७

ष्म कश्चन। एताः सत्या आशिषः सन्तु। द्विजाः--सन्त्वेताः सत्या आशिषः। दक्षिणादानम्-ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्धयर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये। ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये। ॐ पितृपितामहप्रपितामहाः

अ६ नान्दीमुखाः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य नान्दीश्राद्धस्य प्र.प.
२९ फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां
दातुमहमुत्सृज्ये । ॐमातामहप्रमातामहवृद्धप्रमातामहाः
सपत्नीकाः नान्दीमुखाः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य
नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनि-
ष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये । ततः-ॐइडामग्नेपुरु-
दꣳसꣳसुनिङ्गोश्शश्वत्तमꣳहवंमानायसाध । स्यान्नः सुनुस्तनं-
योविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥१॥ उपास्मैगायतानरः 

९६ पवमानायेन्दवे । अभिदेवाँ२इयक्षते ॥ २ ॥ इति अनेन प्र.९.

१०० नान्दीश्राद्धं संपन्नम् । सुसंपन्नमिति द्विजाः । ॐ वाजेवा-

जेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः । अस्यमद्ध्वः

पिबतमादयद्ध्वंतृप्तायातपथिभिर्देवयानैः ॥ आमावाजस्य

प्रसवोजगम्यादेमेद्यावापृथिविविश्वरूपे । आमागन्तांपित-

रामातराचामासोमोऽअमृतत्वेनगम्यात् ॥ ततः—मयाचरिते

आभ्युदयिकनान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उप- १००

विष्टब्राह्मणानां वचनाच्छ्रीगणेशप्रसादाच्च परिपूर्णोऽस्तु' इति वदेत्। ॐअस्तु परिपूर्णः--इति ब्राह्मणाः।

## ❋ अथ वरणम् ❋

देशकालौ सङ्कीर्त्य-अमुकगोत्रोऽमुकप्रवरोऽमुकशर्मा यजमानोऽहमुकप्रवरं यजुर्वेदाध्यायिनममुकशर्माणं ब्राह्मणमस्मिन् ग्रहयागकर्मणि आचार्यं त्वामहं वृणे। आचार्योऽपि-वृतोऽस्मि। अथवा--सर्वेषां गोत्रादीन् पृथक् पृथगुच्चार्य 'ऋत्विजो युष्मानहं वृणे' इति युगपत्सर्वान् वृणुयात्। द्विजाः-

घट वृतास्मः। ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम्। दक्षि-
१०२ णाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ इति मन्त्रं पठेत् ।
ततः–ॐयदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनु-
स्यमानाः। तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टि-
र्यथासम् ॥ ततआचार्यं प्रार्थयेत्–ॐबृहस्पतेऽअतियदर्य्योऽ-
अर्हाद्युमद्विभातिक्रतुमज्जनेषु। यद्दीदयच्छवसऽऋतप्रजा-
ततदस्मासुद्रविणन्धेहिचित्रम् ॥ आचार्यस्तु यथा स्वर्गे श-
क्रादीनां बृहस्पतिः। तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव १०२

५६ सुव्रत ॥ मन्त्रमूर्तिर्भवान्नाथ संसाराघौघनाशन । ग्रहयाग- प्र.प.
१०२ विधावस्मिन् कुरु कर्म यथोदितम् ॥ त्वत्प्रसादाच्च पूर्तस्य
समग्रं फलमाप्नुयाम् । संसारभयभीतेन अयं यज्ञः सुभाक्तितः ॥
प्रारब्धस्त्वत्प्रसादेन निर्विघ्नं मे भवत्विति । यथा शक्रस्य
वागीश आचार्यः सर्वकर्मसु । तथा मया त्वमाचार्यो वृतेऽ-
स्मिन् यज्ञकर्मणि ॥ ततः-ब्रह्माणं प्रार्थयेत्—यथा चतु-
र्मुखो ब्रह्मा सर्वलोकपितामहः । तथा त्वं मम यज्ञेऽस्मिन्
ब्रह्मा भव द्विजोत्तम ॥ सदस्यं प्रार्थयेत्—ॐ सदसस्पति- १०२

म६ मन्द्रंतम्प्रियमिन्द्रस्यकाम्म्यम् । सुनिम्मेधामयासिषुꣳस्वा- प्र.९.
१०४ हा ॥ त्वन्नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणः । आप-
द्विमोक्षणार्थाय सदस्यं त्वामहं वृणे ॥ गाणपत्यं प्रार्थयेत्--
प्रारीप्सितस्य यज्ञस्य जपस्य हवनस्य च । निर्विघ्नेन समा-
प्त्यर्थं गणपं त्वामहं वृणे ॥ उपद्रष्टृवरणे सम्प्रदायागतसर्वोपद्र-
ष्टृवरणे च ॐ ऋतयैस्तेनहृदयंवैरंहत्यायुपिशुनंविविक्त्यैक्षत्ता-
रमौपद्रष्ट्यायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कन्दम्प्रिया-
यम्प्रियवादिनमरिष्ट्याऽअश्वसादꣳस्वर्गायलोकायभागदुघं १०४

मह द्वर्षिष्ठायुनाकांयपारिवेष्ट्वारंम् ॥ भगवन् सर्वकर्मज्ञ सर्वध- प्र.प.
१०५ र्मभृतां वर । वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज ॥
ऋत्विग्वरणे– ॐब्राह्मंणासुःꣳपितंरःꣳसोम्म्यांसःꣳशिवेनोद्यावां-
पृथिवीऽअंनेहसां । पूषानंःपातुदुरितादृंतावृधोरक्षामाऽकिं-
र्न्नोऽअघशंꣳसऽईशत॥ भगवन्सर्वकर्मज्ञ सर्वधर्मभृताम्वर ।
वितते मम यज्ञेऽस्मिन् ऋत्विक्त्वं मे मखे भव ॥

## ❀ अथ ब्राह्मणप्रार्थना ❀

ॐ ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः । १०५

ग्रह देवानां चैव दातारः पातारः सर्वदेहिनाम् ॥ जपयज्ञैस्तथा होमै- प्र.प.
दानैश्च विविधैः पुनः । देवानां च ऋषीणां च तृप्त्यर्थं याजकाः
१०६ स्मृताः ॥ येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् । रक्षन्तु
सततं ते मां ग्रहयज्ञे व्यवस्थिताः ॥ ब्राह्मणा जङ्गमं तीर्थं त्रिषु
लोकेषु विश्रुतम् । येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥
पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः । सर्वकर्मरता नित्यं
वेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाः सत्यवाचश्च ग्रहध्यानरताः
सदा । यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥ अङ्गी- १०६.

ग्रह कुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्ता प्र.प.
१०७ मन्त्रार्थे स्थिरबुद्धयः ॥ यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धि-
माप्नुयुः । ग्रहयागे मया पूज्याः सन्तु मे नियमान्विताः ॥
अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । ग्रहध्यानरता
नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषणाः सन्तु मा सन्तु
परनिन्दकाः । ममापि नियमा ह्येते भवन्तु भवतामपि ॥
ऋत्विजश्च यथा पूर्वं शक्रादीनां मखेऽभवन् । यूयं तथा मे
भवत ऋत्विजो द्विजसत्तमाः ॥ अस्मिन्कर्मणि ये ये तु १०८

वृता गुरुमुखादयः । सावधानाः प्रकुर्वन्तु स्वं स्वं कर्म यथो-
दितम् ॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नैः प्रकर्तव्यं शान्तिकं विधिपूर्वकम् ॥ यथाविहितं कर्म
कुरु (कुरुत) यथाज्ञानं करवाणि (करवामः) इति ।

* अथ आचार्यकर्म *

अस्मिन् ग्रहशान्तिकर्मणि यजमानेन वृतोऽहमाचार्य-
कर्म करिष्ये--इति सङ्कल्प्य वामहस्ते गौरसर्षपान् लाजांश्च
गृहीत्वा-ॐ रक्षोहणंवलगहनंवैष्णवीमिदमहन्तंवलगमुत्किं-

यह रामियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंबलगमुत्किरा- प्र.प.
१०६ मियम्मेसमानोयमसमानोनिचखानेदमहन्तंव्वलगमुत्किरा-
मियम्मेसबन्धुर्यमसबन्धुर्न्निचखानेदमहन्तंव्वलगमुत्किरा-
मियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि॥ रक्षोह-
णोवोवलगहनःप्प्रोक्षामिवैष्णवान्रक्षोहणोवोवलगहनोवन-
यामिवैष्णवान्रक्षोहणोवोवलगहनोवस्तृणामिवैष्णवान्र-
क्षोहणौवांवलगहनाउपदधामिवैष्णवीरक्षोहणौवांवलगहनौ
२० पर्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्थ॥ रक्षसांभागोऽ- १०६

मह. सिनिरंस्तर्ठ० रक्षंऽइदमुहर्ठ० रक्षोभितिष्ठामीदमुहर्ठ० रक्षोवंबा- प्र.पृ.
११० धऽइदमुहर्ठ० रक्षोंधमन्तमोंनयामि । घृतेनंद्यावापृथिवीप्प्रो-
र्णुवाथांव्वायोव्वेस्तोकानांमग्निराज्ज्यंस्यव्वेतुस्वाहास्वाहांकृतेऽ-
ऊर्द्ध्वनंभसम्मारुतङ्गंच्छतम् ॥ रक्षोहाव्विश्श्वचर्षणिरभियो-
निमयोंहते । द्रोणेंसधस्थमासंदत् ॥ अपसर्पन्तु ते भूता ये भूता
भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामवि-
रोधेन ग्रहकर्म समारभे ॥ २ ॥ यदत्र संस्थितं भूतं स्थान- ११०

माश्रित्य सर्वदा । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र- 
 गच्छतु ॥३॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन । ते सर्वेऽप्यपगच्छन्तु ग्रहयागं करोम्यहम् ॥४॥ इति मन्त्रैः पूर्वादिदिक्षु विकिरेत् ।

❋ अथ पञ्चगव्यादिकरणम् ❋

तत्सवितु० गोमूत्रम् । गन्धद्वारेति गोमयम् । आप्यायस्व इति पयः । दधिक्राव्ण इति दधि । ॐ तेजोऽसिशुक्रमस्य- मृतंमासिधामनामासिप्रियंदेवानामनाधृष्टन्देवयजंनमासि ॥ 

४६ इत्याज्यम्। देवस्यत्वेति कुशोदकमादाय 'ॐ' इति प्रणवेन प्र.प.
११२ यज्ञकाष्ठेनालोड्य ॐआपो हि ष्ठेति त्रिभिर्मन्त्रैः कुशैः कर्म-
भूमिं प्रोक्षेत्। ततः कृताञ्जलिः स्वस्ति न इति मन्त्रं पठित्वा
भूमौ प्रादेशं मापयित्वा ॐदेवा आयान्तु यातुधाना अप-
यान्तु विष्णो देवयजनं रक्षस्व इति वदेत्।

### * अथ सर्वतोभद्रपूजनम् *

अस्मिन्कर्मणि प्रधानवेद्यां ब्रह्मादिदेवतानां स्थापनं
पूजनं च करिष्ये-इति सङ्कल्प्य--ॐब्रह्मयज्ञानंप्रथमम्पुर- ११२

ग्रह स्ताद्विसीमुतःसुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः-
११२ ष्ठाःसतश्चयोनिमसतश्चविवः ॥ मध्ये कर्णिकायाम्—ब्रह्मणे० प्र.प.
ब्रह्माणमावा०॥१॥ॐवयᳬसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्र-
जावन्तःसचेमहि । उत्तरे वाप्याम्—सोमाय०सोममा०॥२॥ॐ
तमीशानञ्जगतस्तस्थुषस्प्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ।
पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये॥ ईशान्यां
खण्डेन्दौ-ईशाना०ईशान०॥३॥ ॐत्रातारमिन्द्रमवितारमि-
न्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूतमिन्द्रᳬ ११३

मह स्वस्तिनोमघवाधात्विन्द्रः ॥ पूर्वे वाप्याम्-इन्द्राय०इन्द्र० ।४। प्र. प.
११४ ॐत्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्न्वश्चवन्द्य । त्राता-
तोकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवव्व्रते । आग्नेय्यां
खण्डेन्दौ-अग्नये०अग्नि० ॥५॥ ॐयमायत्वाङ्गिरस्वतेपितृम-
तेस्वाहा । स्वाहाघर्म्मायस्वाहाघर्म्मः पित्रे ॥ दक्षिणे वाप्याम्-
यमाय० यम० ॥६॥ ॐअसुन्न्वन्तमयजमानमिच्छस्तेनस्ये-
त्यामन्न्विहितस्करस्य । अन्यमस्मदिच्छसातऽइत्यानमो
देविनिर्ऋतेतुभ्यमस्तु ॥ नैर्ऋत्यां खण्डेन्दौ--निर्ऋतये० निर्ऋ- ११४

ग्रह० तिमा० ॥७॥ ॐ तत्त्वांयामिब्रह्मणाव्वन्दमानुस्तदाशांस्तेयजं-
मानोहुविर्भिः । अहेडमानोव्वरुणेहबोद्ध्युरुशꣳसमानुऽआ- प्र.प.
२२५ युःप्प्रमोषीः । पश्चिमे वाप्यां--वरुणाय० वरुणमा० ॥ ८ ॥ ॐ
आनोनियुद्भिः शुतिनीभिरध्वरꣳसंहुस्रिणीभिरुपंयाहियुज्ञम् ।
व्वायोऽअस्मिन्त्सवंनेमादयस्वयूयम्पांतस्वुस्तिभिः सदांनः ॥
वायव्यां खण्डेन्दौ--वायवे० वायुमा० ॥९॥ सोमेशानयोरन्त-
राले-ॐसुगावोदेवाःसदंनाऽअकर्मयऽआंजुग्मेदꣳसवंनञ्जु-
षाणाः । भरंमाणाव्वहंमानाहुवीꣳष्यस्मेधंत्तवसवोवसूंनि ११५

म० स्वाहा॥ वायुसोममध्ये भद्रे-अष्टवसुभ्यो० अष्टवसूना० ॥१०॥ प्र.१.
११६ ॐ रुद्राःसꣳसृज्यपृथिवीम्बृहज्ज्योतिꣳसमीधिरे। तेषांभानुर-
जंस्रुऽइच्छुक्रोदेवेषुरोचते॥ सोमेशानमध्ये भद्रे-एकादशरुद्रे-
भ्यो० एकादशरुद्रानावा० ॥११॥ ॐ यज्ञोदेवानांप्रत्येतिसुम्न-
मादित्यासोभवतामृडयन्तः। आवोर्वाचीसुमतिर्ववृत्यादꣳ
होश्चिद्याव्वरिवोवित्तरासदादित्येभ्यस्त्वा॥ ईशानेन्द्रमध्ये
भद्रे-द्वादशादित्येभ्यो० द्वादशादित्याना० ॥१२॥ ॐ अश्वि-
नातेजसाचक्षुःप्प्राणेनसरस्वतीवीर्य्यम्। वाचेन्द्रोबलेनेन्द्रा- ११६

मह यदधुरिन्द्रियम्॥ इन्द्राग्निमध्येभद्रे-अश्विभ्यां०आश्विनौ० १३ प्र.प.

११७ ॐविश्वेदेवासुऽआगंतशृणुतामऽइमꣳहवम्। एदम्बर्हिर्न्निषी-

दत। उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्व्वि

श्वेभ्यस्त्वादेवेभ्यः॥ अग्नियममध्ये भद्रे-सपैतृकविश्वेभ्यो

देवेभ्यो० सपैतृकविश्वान्देवान।०॥१४॥ ॐअभित्यन्देवꣳसवि-

तारमोण्योःकविक्रतुमर्च्चामिसत्त्यसवꣳरत्नधामभिप्रियम्मु-

तिङ्कविम्। ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनिहिरण्य-

पाणिरमिमीतसुक्रतुःकृपास्वः। प्रजाभ्यस्त्वाप्प्रजास्त्वा- ११७

नुप्प्राणन्तुप्प्रजास्त्वमनुप्प्राणिहि। यमनिर्ऋतिमध्ये भद्रे-सप्त-
यक्षेभ्यो० सप्तयक्षानावा० ॥१५॥ ॐ नमोस्तुसर्प्पेभ्योयेके-
चपृथिवीमनु। येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः॥
निर्ऋतिवरुणमध्ये भद्रे--अष्टकुलनागेभ्यो० अष्टकुलनागा-
नावा० ॥१७॥ ॐ ऋताषाड्ऋतधामाग्निर्गन्धर्वस्तस्यौषधयो-
प्सरसोमुदोनाम। सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट्ता-
भ्यःस्वाहा॥ वरुणवायुमध्ये भद्रे-गन्धर्वाप्सरोभ्यो०गन्धर्वा-
प्सरस आ० ॥१७॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्स-

मुद्राद्दुतवापुरीषात्। श्येनस्यंपक्षाहंरिणस्यंबाहूऽउंपस्त्युत्य-
म्महिंजातन्तेंऽअर्वन् ॥ ब्रह्मसोममध्ये वाप्याम्- स्कन्दाय०
स्कन्दमा०॥१८॥ॐआशुःशिशांनोवृषभोनभीमोघंनाघनः
क्षोभंणश्चर्षणीनाम्। सुङ्क्रन्दंनोनिमिषऽएंकवीरःशुतंसेनांऽ-
अजयत्साकमिन्द्रंः॥ तत्रैव नन्दीश्वराय०नन्दीश्वरमा० १९
ॐयत्तेगात्रांदग्निनांपुच्यमांनादभिशूलन्निहंतस्यावधावंति ।
मातङ्क्ूम्यामाश्रिंषन्मातृणेषुदेवेभ्युस्तदुशद्भ्योरांतमंस्तु॥
तत्रैव-शूलाय० शूलमा०॥२०॥ॐकापिंरासिसमुद्रस्यत्वाक्षिं-

त्याऽउन्नयामि । समापोऽअद्भिरग्मत समोषधीभिरोषधीः ॥ 
 तत्रैव-महाकालाय० महाकाल० ॥२१॥ ॐ शुक्रज्योतिश्च चि-
त्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्च ऋतपाश्चा-
त्यंहाः ॥ ब्रह्मेशानमध्ये श्रह० दक्षादिभ्यो० दक्षादि आ० २२
ॐ अम्बेऽअम्बिके० ब्रह्मेन्द्रमध्ये वाप्याम्-दुर्गायै दुर्गामा० २३
ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे-
स्वाहा ॥ तत्रैव-विष्णवे० विष्णुमा० ॥२४॥ ॐ पितृभ्यः स्व-
धायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा- 

नमः शंभवायच मयोभवायच नमः शङ्कराय च मयस्कराय प्र.९.
१३३ च नमः शिवायच शिवतरायच॥ दक्षिणे--चण्डभैरवाय० चण्ड-
भैरवमा० ॥३॥ यातेरुद्रशिवातनूरघोरापापकाशिनी। तयान-
स्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि॥ नैर्ऋत्याम्-- क्रो-
धभैरवाय० क्रोधभैरवमा० ॥४॥ ॐ उन्नतऽऋषभोवामनस्तऽ-
ऐन्द्रावैष्णवाऽउन्नतऽशितिबाहुऽशितिपृष्ठस्तऽऐन्द्राबार्हस्प-
त्याऽशुकरूपावाजिनःकल्माषाऽआग्निमारुताः श्यामाः
१२ पौष्णाऽ ॥ पश्चिमे--उन्मत्तभैरवाय०उन्मत्तभरवैमा० ॥५॥ १३३

ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि। समापोऽअद्भि- 
 रग्मतसमोषधीभिरोषधीः॥ वायव्याम्--कपालभैरवाय० क-
पालभैरवमा० ॥६॥ ॐउग्रश्चभीमश्चध्वान्तश्चधुनिश्च। सासु-
हाँश्चाभियुग्वाचविक्षिपःस्वाहा ॥ उत्तरे--भीषणभैरवाय०
भीषणभैरवमा०॥७॥ ॐरुद्राःसꣳसृज्यपृथिवींबृहज्ज्योतिः
समीधिरे। तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषुरोचते॥ ईशान्याम्-
संहारभैरवाय० संहारभैरवमा० ॥८॥ 

९६ ❋ अथाग्न्युत्तारणम् ❋

२३५ ततस्तन्मध्ये कलशस्थापनाविधिना ताम्रकलशं संस्थाप्य प्र.प.
कस्मिंश्चित्ताम्रमयपात्रे स्वर्णमयीं प्रतिमां पञ्चामृतलेपनपूर्वकं
ताम्बूलोपरि निधाय सततं जलधारां दद्यात्--समुद्रस्यत्वाव-
कयाग्नेपरिव्ययामसि। पावकोऽअस्मभ्यंशिवोभव॥१॥ हिम
स्यत्वाजरायुणाग्नेपरिव्ययामसि। पावकोऽअस्मभ्यंशिवो
भव॥२॥ उपज्मन्नुपवेतसेऽवतरनदीष्वा। अग्नेपित्तमपामसि
मण्डूकिताभिरागहिसेमन्नोयज्ञंपावकवर्णंशिवङ्कृधि॥३॥ २३५

अपामिदन्न्ययंनᳫ समुद्रस्यंनिवेशंनम्। अन्न्यांस्तेंऽअस्म्मत्तंप-
न्तुहेतयंः पावकोऽअस्म्मभ्यंᳫशिवोभंव ॥४॥ अग्नेपावकरो-
चिषांमन्द्रयांदेवजिह्वयां। आदेव। न्वंक्षिसक्षिंच ॥५॥ सनंःपा-
वकदीदिवोग्ग्नेंदेवाँ२ऽइहावंह। उपंयज्ञᳫहविश्चंनः ॥६॥ पा-
वकयायश्चितयंन्त्याकृपाक्षामंन्नुरुचऽउषसोनभानुनां। तू-
र्व्वन्नयामन्नेतंशस्यनूरणऽआयोघृणेनतंतृषाणोऽअजरंः ॥७॥
नमंस्तेहरंसेशोचिषेनमंस्तेऽअस्त्वर्चिषे। अन्न्यांस्तेंऽअस्म्म-
त्तंपन्तुहेतयंःपावकोऽअस्मभ्यंᳫशिवोभंव ॥८॥ नृषदेव्वेड-

ग्रह प्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्वर्विदेवेट् ॥ ९ ॥ येदेवादेवा- म.प.
१३७ नांय्यज्ञियांयज्ञियानांᳫसंवत्सरीणमुपभागमासते । अहुता-
दोहविषोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तुमधुनोघृतस्य॥१०॥येदे
वादेवेष्वधिदेवत्वमायन्येब्रह्मणःपुरऽएतारोऽअस्य। येभ्यो-
नऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याअधिस्नुषु ॥११॥
प्राणदाऽअपानदाव्यानदावर्च्चोदावरिवोदाः । अन्यास्तेऽअ-
स्मत्तपन्तुहेतयःपावकोऽअस्मभ्यᳫशिवोभव ॥१२॥ इत्य-
ग्न्युत्तारणं कृत्वा प्रतिमां करेण संस्पृश्य--ॐ आं ह्रीं क्रों यं रं १३७

लं वं शं षं सं हं सः अस्यां मूर्तौ प्राणा इह प्राणाः। ॐ आं
ह्रीं क्रों० अस्यां मूर्तौ जीव इह स्थितः। ॐ आं ह्रीं क्रों० अस्यां
मूर्तौ सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणपाणि-
पादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा। तत-
स्तां प्रतिमां रजतादिसिंहासनोपरि स्थापयित्वा पूजयेत्।

## * अथाग्निस्थापनम् *

कर्ता त्रिभिः कुशैः प्रागग्रैः प्राक्संस्थमुदक्संस्थं वा त्रिः
परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकाभ्यामुद-

ग्रह क्संस्थं त्रिरुपलिप्य स्रुवेण प्रादेशमात्राः स्थण्डिलप्रमाणा वा प्र.१.
१३९ प्रागग्राः त्रिरुल्लिख्य अनामिकाङ्गुष्ठेनोद्धृत्य ईशान्यां प्रक्षिप्य
च जलेनाभ्युक्ष्य निर्धूममग्निं तासु रेखासु--ॐ अग्निन्दूतंपुरो दधेहव्यवाहमुपब्रुवे। देवाँऽआसादयादिह॥ इति स्थापयेत्।

## ❀ अथ ग्रहस्थापनम् ❀

ॐ आकृष्णेनरजंसावर्तमानोनिवेशयंन्नमृतम्मर्त्यंञ्च। हि-

१—वृत्तमण्डलमादित्यमर्धचन्द्रं निशाकरम्। त्रिकोणं मङ्गलं चैव बुधं च धनुराकृतिम्॥ गुरुमष्टदलं प्रोक्तं चतुष्कोणं च भार्गवम्। नराकृतिं शनिं विद्याद्राहुं च मकराकृतिम्॥ केतुं खड्गसमं ज्ञेयं ग्रहमण्डलकं शुभे॥ अथवा—वृत्तमण्डलमादित्यं चतुरस्रं निशाकरम्। त्रिकोणं मङ्गलं चैव बुधं वै बाणसन्निभम्॥ गुरवे पट्टिशाकारं पञ्चकोणं भृगुं तथा। मन्दे च धनुराकारं सूर्पाकारं तु राहवे॥ केतवे च ध्वजाकारं मण्डलानि क्रमेण तु॥ १३९

२—अरुणौ सूर्यसोमौ च श्वेतौ शुक्रनिशाकरौ। हरितवर्णो बुधश्चैव पीतवर्णो गुरुस्तथा॥ कृष्णवर्णो शनी राहुकेतवस्तु तथैव च॥

प्र३ रण्ययेनसवितारथेनादेवोयांतिभुवंनानिपश्यंन्॥ओँभूर्भुवःस्वः प्र.प.
१४० कलिङ्गदेशोद्भव काश्यपगोत्र रक्तवर्ण भो सूर्य इहागच्छ इह
तिष्ठ सूर्याय० सूर्यमा०। ओँइमन्देवाऽअसपत्नꣳसुवद्ध्वम्म-
हतेक्षत्रायंमहतेज्यैष्ठ्यांयमहतेजानंराज्यायेन्द्रंस्येन्द्रियायं।
इममुमुष्ष्यंपुत्रमुस्यैविशऽएषवोंमीराजासोमोऽस्माकंब्राह्म-
णानाꣳराजा॥ ओँभू० यमुनातीरोद्भव आत्रेयगोत्र शुक्लवर्ण
भो सोम इह।० सोमाय० सोममा०। ओँअग्निर्मूर्द्धादिवः ककु-
त्पतिः पृथिव्याऽअयम्। अपाꣳरेताꣳसिजिन्वति॥ ओँभू० १४८

अवन्तिकापुरोद्भव भरद्वाजगोत्र रक्तवर्ण भो भौम इहा० भौ-
माय० भौममा०। ॐउद्बुध्यस्वाग्नेप्रतिंजागृहित्वमिष्टापूर्तेसᳪं
सृंजेथामयञ्च । अस्मिन्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायज-
मानश्चसीदत ॥ ॐभू० मगधदेशोद्भव आत्रेयगोत्र हरितवर्ण
भो बुध इहाग० बुधाय० बुधमा० । ॐबृहस्पतेऽअतियदर्योऽ
अर्हाद्द्युमद्विभातिक्रतुमज्जनेषु। यद्दीदयच्छवसऽऋतप्रजाततद-
स्मासुद्रविणन्धेहिचित्रम् ॥ ॐभू० सिन्धुदेशोद्भव आङ्गिर-
सगोत्र पीतवर्ण भो बृहस्पते इहा० बृहस्पतये० बृहस्पतिमा० ।

ग्रह ॐअन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमंप्रजापतिः। प्र.प.
१४२ ऋतेनंसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिद-
म्पयोमृतम्मधु॥ ॐभू० भोजकटदेशोद्भव भार्गवगोत्र शुक्ल-
वर्ण भो शुक्र इहा० शुक्राय० शुक्रमा०। ॐशन्नोदेवीरभिष्टं-
यऽआपोभवन्तुपीतये। शंय्योरभिस्रवन्तुनः॥ ॐभू० सौराष्ट्र-
देशोद्भव काश्यपगोत्र कृष्णवर्ण भो शनैश्चर इहा० शनैश्चराय०
शनैश्चरमा०। ॐकयानश्चित्रऽआभुवदूतीसदावृधःसखा। क-
याशचिष्ठयावृता॥ ॐभू० राठिनापुरोद्भव पैठिनसगोत्र कृष्ण- १४२

वर्ण भो राहो इहाग० राहवे० राहुमा०। ॐकेतुंकृण्वन्नकेतवेपे- र.प.
शोंमर्य्याऽअपेशसे। समुषद्भिरजायथाः॥ ॐभू० अन्तर्वेदिस-
मुद्भव जैमिनिगोत्र कृष्णवर्ण भो केतो इहाग० केतवे० केतुमा०।

अथ ग्रहदक्षिणपार्श्वे अधिदेवतास्थापयेत्-

ॐत्र्यंम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम्। उर्वारुकमिव
बन्धनान्मृत्योर्मुक्षीयमामृतात्॥ ईश्वराय० ईश्वरमा०। ॐश्री-
श्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्या- १४२

१—ईश्वरोमास्कन्द हरिब्रह्मेन्द्रयमकालकाः। चित्रगुप्त इतीमे वै ग्रहाणामधिदेवताः॥

त्तम् । इष्णन्निषाणमुम्मंऽइषाणसर्वलोकंमंऽइषाण ॥ उमायै०
उमा० । ॐयदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवा
पुरीषात् । श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यम्महिजातन्तेऽ
अर्वन् । स्कन्दाय० स्कन्दमा० । ॐइदंविष्णुर्विचक्रमेत्रेधानिद-
धेपदम् । समूढमस्यपाꣳसुरे ॥ विष्णवे० विष्णुमा० । ॐआब्रह्म-
न्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योति-
व्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिःपु-
रन्धिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यवीरोजा-

५६ यताँन्निकामेनिकामेनःपर्ज्जन्योवर्षतुफलवत्योनऽओषधयः प्र.९.
१४५ पच्यन्तांयोगक्षेमोनःकल्पताम् ॥ ब्रह्मणे० ब्रह्माणमा०। ॐ
सुजोषाऽइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान्। जु-
हिशत्रूँ१॥रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः॥इन्द्राय०
इन्द्रमा०।ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा।स्वाहाघर्मा-
यस्वाहाघर्मःपित्रे॥ यमाय० यममा०। ॐकार्षिरसिसमुद्र-
१२ स्यत्वाक्षित्याऽउन्नयामि। समापोऽअद्भिरग्मतसमोषधी- १४५

भिरोषधीः ॥ कालाय० कालमा० । ॐचित्रावसोस्वस्तिते



पारमंशीय ॥ चित्रगुप्ताय० चित्रगुप्तमा० ।

## ❋ अथ ग्रहवामपार्श्वे प्रत्यधिदेवतास्थापनम् ❋

ॐअग्निन्दूतम्पुरोदधेहव्यवाहमुपब्ब्रुवे । देवाँऽआसादयादिह ॥ अग्नये० अग्निमा० । ॐआपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन । महेरणायचक्षसे ॥ अद्भ्यो० अप आवा० । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानःशर्म्मसप्र-



१—अग्निरापःक्षितिर्विष्णुरिन्द्र ऐन्द्री च देवताः । प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः ॥

 थां ॥ पृथिव्यै० पृथिवीमा० । ॐइदंविष्णुर्व्विचक्रमेत्रेधानिदधे 
१४७ पदम् । समूढमस्यपाᳪंसुरे ॥ विष्णवे० विष्णुमा० । ॐइन्द्रऽ
आसान्नेताबृहस्पतिर्द्दक्षिणायज्ञःपुरऽएतुसोमः । देवसेनाना-
मभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् ॥ इन्द्राय० इन्द्र-
मावा० । ॐअदित्यैरास्नासीन्द्राण्याऽउष्णीषः । पूषासिघ-
र्म्मायदीष्व ॥ इन्द्राण्यै०इन्द्राणीमा० । ॐप्रजापतेनत्वदेतान्य-
न्योव्विश्वारूपाणिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोऽअ-
स्तुव्वयᳪंस्यामपतयोरयीणाम् ॥ प्रजापतये० प्रजापतिमावा० । १४७

ग्रह ॐनमोऽस्तुसर्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवि
१४८ तेभ्यःसर्पेभ्योनमः ॥ सर्पेभ्यो० सर्पानावा० । ॐब्रह्मयज्ञा प्र.प.
नम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः । सबुध्न्याऽउपमा
ऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ब्रह्मणे० ब्रह्माणमा० ।

## ❋ अथ विना[1]यकादिपञ्चलोकपालदेवतावास्तोष्पति-क्षेत्रपालं च स्थापनम् ❋

ॐगणानान्त्वा० । गणपतये० गणपतिमा० । ॐअम्बेऽअ- १४८

१—विनायकं तथा दुर्गां वायु माकाशमेव च । आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥

ग्रह म्बि॰। दुर्गायै॰ दुर्गामा॰। ॐ वायोयेतेसहस्रिणोरथासस्तेभि-
१४९ रागंहि। नियुत्वान्सोमपीतये॥ वायवे॰ वायुमा॰। ॐ घृतंघृत- ग.प.
पावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वा-
हा। दिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा॥
आकाशाय॰ आकाशमा॰। ॐ यावाङ्कशामधुमत्यश्विनासूनृ-
तावती। तयायज्ञम्मिमिक्षतम्॥ अश्विभ्यां॰ अश्विनौ आवाह॰।
ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवानः।
यत्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे॥ वास्तो- १४९

९६ ष्पतये० वास्तोष्पतिमा० । ॐ नहिस्पशमविदन्नन्यमस्माद्वै-
१५० श्वानरात्पुरऽएतारमग्नेः । एमेनमवृधन्नमृताऽअमर्त्त्यंवैश्वा-
नरंक्षैत्रजित्यायदेवाः ॥ क्षेत्राधिपतये० क्षेत्राधिपतिमा० ।

## ❋ अथ मण्डलाद्बाह्ये दशदिक्पालानां स्थापनम् ❋

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳसूरमि-
न्द्रम् । ह्वयामिशक्रंपुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्वि-
न्द्रः ॥ इन्द्राय० इन्द्रमा० । ॐ त्वन्नोऽअग्नेतवदेवपायुभिर्म- १५०

८६ र्मघोनौरक्षतन्वश्चवन्द्य । त्रातातोकस्यतनयेगवामस्यनिमे-
१५.१ षठं०रक्षमाणस्तवव्रते ॥ अग्नये० अग्निमा० । ॐसुमायु प्र.५.
त्वाङ्गिरस्वतेपितृमतेस्वाहा । स्वाहाघुर्मायस्वाहाघुर्मःपित्रे ॥
यमाय० यममा० ॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्ये-
त्यामन्विहितस्करस्य । अन्यमस्मदिच्छसातऽइत्यानमोदेवि
निर्ऋतेतुभ्यमस्तु ॥ निर्ऋतये० निर्ऋतिमा० । ॐतत्त्वायामिब्र
ह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः । अहेडमानोव-
रुणेहबोध्युरुषठं०समानऽआयुःप्रमोषीः ॥ वरुणाय० वरुण- १५.२

अ० ६ मा०। ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम्। वायोऽअस्मिन्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः॥ वायवे० वायुमा०। ॐ वयꣳसोमव्रतेतवमनस्तनूषु बिभ्रतः। प्रजावन्तःसचेमहि॥ सोमाय० सोममा०। ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम्। पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये॥ ईशानाय० ईशानमा०। ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः। यःशꣳसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअ-

प्र.९. १५२ १५२

ग्रह स्माँ२ऽअंवन्तुदेवाः॥ पूर्वेशानयोर्मध्ये- ब्रह्मणे० ब्रह्माणमा०। प्र.प.
१५३ ॐस्योनापृथिविनोभवान्नृक्षरानिवेशनी । यच्छानःशर्मसप्र-
थाः॥ निर्ऋतिपश्चिमयोर्मध्ये—अनन्ताय० अनन्तमा०। ततः
षोडशोपचारैः संपूज्य प्रार्थयेत्—ॐग्रहाँऽऊर्जाहुतयोव्य-
न्तोविप्रायमतिम् । तेषांविशिप्रियाणांवोहमिषमूर्जंसमं-
ग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रा
यत्वाजुष्टतमम् ॥ ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी १५३

भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु ॥ 

## असंख्यातरुद्रस्थापनम्

ईशानदेशे कलशं संस्थाप्य ॐ असंङ्ख्यातासहस्राणिये रुद्राऽअधिभूम्याम् । तेषांꣳसहस्रयोजनेवधन्वानितन्मासि ॥ इति पूजयेत् ।

## अथ कुशकण्डिका

अग्नेर्दक्षिणतो ब्रह्मासनम् । अग्नेरुत्तरतः प्रणीतासनद्वयम् ।

६ ब्रह्मासने ब्रह्मोपवेशनम्। यावत्कर्म समाप्यते तावत्त्वं ब्रह्मा भव प्र.प.
१५५ 'भवामि' इति पठित्वा तत्रोपवेशनम्। 'भवामि' इति ब्रह्मणः
प्रत्युक्तिः। ब्रह्मा वाग्यतश्च भवेत्। ततः प्रणीतापात्रं सव्यहस्ते
धृत्वा दक्षिणहस्तगृहीतेनोदकपात्रेण तत्र जलं सम्पूर्य पश्चादा-
स्तीर्णकुशेषु दक्षिणहस्तेन निधाय (कुशैराच्छाद्य) तत्पात्र-
मालभ्य ब्रह्मणो मुखमवलोक्य ईक्षणमात्रेण ब्रह्मणाऽनुज्ञातः
उत्तरत आस्तीर्णेषु कुशेषु निदध्यात्। ततो द्वादशानां
परिस्तरणकुशानां चतुरो भागान् वामहस्ते कृत्वा एकैक- १५५

म६ भागेन आग्नेयादीशानान्तम्, ब्रह्मणोऽग्निपर्यन्तम्, नैर्ऋ- प्र.प.
१५६ त्याद्वायव्यान्तम्, अग्नितः प्रणीतापर्यन्तम्। इतरथावृत्तिः।
तत उत्तरतः स्तीर्णकुशेषु द्विशः पात्राणि यथासम्भवं न्यु-
ब्जानि उदक्संस्थानि प्राक्संस्थानि वा सादयेत्। पवित्रे। छेद-
नकुशाः। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। संमा-
र्जनकुशाः पञ्च। उपयमनकुशाः सप्त। समिधस्तिस्रः। स्रुवः।
आज्यम्। तण्डुलाः। पूर्णपात्रम्। उपकल्पनीयानि—तत्तद्ग्रह-
वस्त्राणि। अधिदेवताद्यर्थं श्वेतानि च। तत्तद्ग्रहचन्दनानि। १५६

५६ अक्षतास्तद्ग्रहवर्णाः । तत्तद्ग्रहपुष्पाणि । तत्तद्ग्रहधूपाः । प्र. ५
१५७ तत्तद्ग्रहनैवेद्यानि । फलानि । दक्षिणाः । वितानम् । अर्का-
दिसमिधः । सयवतिलाः । पूर्णाहुत्यर्थं नारिकेलवस्त्रादि ।
ततः पवित्रकरणम् । तद्यथा--आसादितं कुशपत्रद्वयं स्थौल्येन
समं मध्यशल्यरहितं वामहस्ते कृत्वा अग्रतः प्रादेशमात्रं
परिमाय मूले तयोरुपरि कुशत्रयमुदगग्रं निधाय तत्कुश-
त्रयं तयोर्मूलभागेन प्रादक्षिण्येन परिवेष्टय तयोः प्रादेशपरि-
२४ माणमग्रभागं वामहस्ते कृत्वा अवशिष्टं मूलभागं कुशत्रयं १५७

५६ च दक्षिणहस्ते धृत्वा दक्षिणहस्तेन त्रोटयेत् परित्यजेच्च । प्र.प.
१५८ शिष्टं पत्रद्वयं पवित्रम् । तस्मिन्पत्रद्वयेऽविश्लेषाय ग्रन्थिं
कुर्यात् । ततः प्रागग्रं प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय
तत्र सपवित्रेण पात्रान्तरेण हस्तेन वा प्रणीतोदकं त्रिरासिच्य
प्रोक्षणीपात्रं सव्ये कृत्वा दक्षिणेन वामहस्तधृतमेव कर्णसमु-
त्थाय नीचैः कृत्वा प्रणीतोदकेन पवित्रानीतेनोत्तानहस्तेन
प्रोक्षणीः प्रोक्षयेत् । ततः प्रोक्षणीजलेन आज्यस्थालीं प्रोक्ष-
णम् । चरुस्थालीं प्रोक्षणम् । संमार्जनकुशानां प्रोक्षणम् । १५८

अह उपयमनकुशानां प्रोक्षणम्। समिधां प्रोक्षणम्। स्रुवस्य प्रो- प्र.प.
१५६ क्षणम्। आज्यस्य प्रोक्षणम्। पूर्णपात्रस्य प्रोक्षणम्। ततस्ते
पवित्रे प्रोक्षणीपात्रे संस्थाप्य प्रोक्षणीपात्रमग्निप्रणीतयोर्मध्ये
निदध्यात्। ततोऽग्नेः पश्चादाज्यस्थालीं निधाय तत्राज्यं
प्रक्षिपेत्। एवं चरुस्थालीमग्नेः पश्चिमतो निधाय तत्र सप-
वित्रायां त्रिःप्रक्षालितान् तण्डुलान् प्रक्षिप्य प्रणीतोदकमा-
सिच्योपयुक्तं जलं तत्र निनीय ब्रह्मदक्षिणत आज्यम् आचार्य
उत्तरतश्चरुमदग्धमस्रावितमण्डमन्तरूष्मपक्वं सुशृतं पचेत्। १५६

५६ ( केवलाज्ये तु उत्तराश्रितामाज्यस्थालीमग्नावारोपयेत् )। त- १.२.
१६० तोऽग्नेर्ज्वलदुल्मुकमादाय ईशानादिप्रदक्षिणमीशानपर्यन्त-
मग्निमाज्यचर्वोः परितं भ्रामयित्वोल्मुकमग्नौ प्रक्षिप्य अप्र-
दक्षिणं हस्तमीशानकोणपर्यन्तं पर्यावर्तयेत्। अर्द्धश्रिते चरौ
स्रुवं गृहीत्वाऽधोबिलं सकृत् प्रतप्य संमार्जनकुशानामग्रै-
रन्तरतः--उपरि मूलादारभ्याग्रपर्यन्तं प्राञ्चं संमृज्य कुश-
मूलैर्बाहिरधः प्रदेशे अग्रादारभ्य प्रत्यञ्चं सम्मृज्य संमार्जन-
कुशानग्नौ प्रक्षिप्य प्रणीतो [प्रोक्षण्यु] दकेन स्रुवमभ्युक्ष्य १६०

पुनः स्रुवमभ्युक्ष्य पुनः स्रुवं प्रतप्य दक्षिणस्यां दिशि तं स्थापयेत्। ततः शृतं चरुं स्रुवेण गृहीतेनाज्येनाभिघार्य आज्य-स्थालीं चरोः पूर्वेणानीयोत्तरत उद्वास्याग्नेः पश्चिमतः स्थाप-येत् । ततश्चरुमादाय उत्तरत उद्वास्य आज्यस्य पूर्वेणानीय आज्यस्योत्तरतः स्थापयेत् । (ततः पुनश्चरुमभिघार्य) ततो दक्षिणहस्तस्याङ्गुष्ठनामिकाभ्यां पवित्रयोर्मूलं सङ्गृह्य वाम-हस्तस्याङ्गुष्ठानामिकाभ्यां तयोरग्रं सङ्गृह्य ऊर्ध्वाग्रेऽनग्नी-कृत्य धारयन्नेवाज्ये प्रक्षिप्याज्यस्योत्पवनं कुर्यादुच्छालयेत् ।

तत आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरस्येत्। ततः पूर्ववत्पवित्रे गृहीत्वा प्रोक्षणीनामपामुत्पवनं कुर्यात्। ततो वामहस्ते पञ्चविंशतिकुशनिर्मितमुपयमनादाय दक्षिणेन प्रादेशमात्रीः पालाशीस्तिस्रः समिधो घृताक्ता द्व्यङ्गुलादूर्ध्वं मध्यमानामिकाङ्गुष्ठैर्मूलभागे धृतास्तर्जन्यग्रवत्स्थूलास्तन्त्रेणाग्नौ तूष्णीं प्रक्षिप्य सपवित्रेण प्रोक्षण्युदकेन चुलुकगृहीतेन ईशानादिप्रदक्षिणमीशानकोणपर्यन्तं पर्युक्ष्य अप्रदक्षिणमीशानकोणपर्यन्तं हस्तं पर्यावर्तयेत्। ततः पवित्रे प्रणीतासु निधाय

५६ दक्षिणं जान्वाच्य ब्रह्मणा कुशैरन्वारब्धः उपयमनकुशसहितं प्र.प.
१६३ प्रसारिताङ्गुलिहस्तं हृदि निधाय दक्षिणहस्तेन मूले चतुर-
ङ्गुलं त्यक्त्वा शङ्खसन्निभमुद्रया स्रुवं गृहीत्वा समिद्धतमेऽग्नौ
वायव्यकोणादारभ्याग्निकोणपर्यन्तं प्राञ्चं वा सन्ततघृत-
धारया मनसा प्रजापतिं ध्यायन् स्रुवेण तूष्णीं सशेषं मौनी
जुहुयात् । नात्र स्वाहाकारः । इदं प्रजापतये न मम इति
यजमानेन त्यागः कर्तव्यः । होमत्यागानन्तरं स्रुवावशिष्ट-
स्याज्यस्य सर्वत्र प्रोक्षणीपात्रे प्रक्षेपः कार्यः । ततो निर्ऋति- १६३

मह कोणादारभ्येशानकोणपर्यन्तं प्राञ्चं वा—ॐ इन्द्राय स्वाहा- प्र.प.
१६४ इति जुहुयात्। इदमिन्द्राय न मम’ इति त्यजेत्। तत
उत्तरपूर्वार्द्धे—ॐ अग्नये स्वाहा—इदमग्नये न मम इति हुत्वा
दक्षिणपूर्वार्द्धे—ॐ सोमाय स्वाहा—इदं सोमाय न मम इति
जुहुयात्। ततो यजमानः द्रव्यत्यागं कुर्यात्। तत्र च बहु-
कर्तृके होमे यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वा-
त्सर्वं हवनीयं द्रव्यं देवताश्च मनसा ध्यात्वा त्यजेत्। तच्चैवम्-
इदमुपकल्पितं समित्तिलादिद्रव्यं (यथासम्पादितम्) या या १६४

यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तं न ममेति साक्ष-
तजलं भूमौ क्षिपेत् । यथादैवमस्तु ।

## * अथ ग्रहहोमः *

ॐगणानां । ॐअम्बेऽअम्बिके । ॐआकृष्णे । ॐइमन्देवा ।
ॐअग्निर्मूर्द्धा । ॐउद्बुध्यस्वा । ॐबृहस्पते । ॐअन्नात्प ।
ॐशन्नोदे । ॐकयान । ॐकेतुङ्कृ । ॐत्र्यम्बकं । ॐश्रीश्चते ।
ॐयदक्रन्द । ॐविष्णोरराट । ॐआब्रह्म । ॐसजोषा । ॐ
समायुत्वा । ॐकार्षिर । ॐचित्राव । ॐअग्निन्दू । ॐआ-

अह प्रोहि। ॐस्योनापृं। ॐइदंवि। ॐइन्द्रंऽआ। ॐअदित्यै। प.प.
२६६ ॐप्रजापते। ॐनमोऽस्तुस। ॐब्रह्मयज्ञा। ॐगुणानां। ॐ
अम्बेऽअ। ॐवायोयेते। ॐघृतंघृत। ॐसावाङ्कुशा। ॐवा-
स्तोष्पते। ॐनहिस्पश। ॐत्रातारमि। ॐत्वन्नोऽअग्ने।
ॐसमायुत्वा। ॐअसुन्वन्त। ॐतत्त्वायामि। ॐआनोनि।
ॐवयर्ठ०सो। ॐतमीशानं। ॐअस्मेरुद्रा। ॐस्योनापृं। ततः
स्थापितदेवानां सकृत्सकृदाज्येन जुहुयात्। १६६:

## * अथोत्तरतन्त्रम् *

ॐ अग्नेनयंसुपथांरायेऽअस्म्मान्विश्वानिदेवव्वयुनानि
व्विद्वान् । सुयोद्ध्युस्म्मज्जुहुराणमेनोभूयिंष्ठान्तेनमंऽउक्तिं
व्विधेम ॥ इत्यग्निं सम्पूज्य वामहस्ते महत्पात्रे तिलान्
गृहीत्वा दक्षिणहस्तेनाज्यपूर्णं स्रुवं गृहीत्वा दक्षिणं जान्वाच्यं
ब्रह्मणान्वारब्धः— ॐअग्नये स्विष्टकृते स्वाहा— इदमग्नये
स्विष्टकृते न मम इति ।

ग्रह
२६८

# ❋ अथ नवाहुतिः ❋

प्र.प.

ॐ भूः स्वाहा--इदमग्नये न मम। ॐ भुवः स्वाहा-इदं वायवे न मम। ॐ स्वः स्वाहा-इदं सूर्याय न मम। ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांᳬसि प्रमुमुग्ध्यस्मत् स्वाहा॥ इदमग्नीवरुणाभ्यां न मम। ॐ सत्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ। अवयक्ष्व नो वरुणᳬ रराणो वीहि मृडीकᳬ सुहवो नऽएधि स्वाहा। इदमग्नीवरुणाभ्यां

१६८

२८ न मम। ॐअयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमयाऽ- प्र.प.
१६६ असि। अयानोयज्ञंवहास्ययानोधेहि भेषजꣳस्वाहा-इदमग्नये
अयसे न मम। ॐयेतेशतंवरुणयेसहस्त्रंयज्ञियाःपाशावित-
तामहान्तः। तेभिर्न्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः
स्वर्क्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो
मरुद्भ्यः स्वर्केभ्यश्च न मम। ॐउदुत्तमंवरुणपाशमस्मदवा-
धमंविमध्यमꣳश्रथाय। अथावयमादित्यव्रतेतवानागसोऽ-
१५ अदितयेस्यामस्वाहा॥ इदं वरुणायादित्यायादितये न मम। १६६

७६ ॐ प्रजापतये स्वाहा--इदं प्रजापतये न मम । प्र.९

१८० * अथ दशदिक्पालबलिः *

देशकालौ सङ्कीर्त्य--पूजितदेवताभ्यो बलिप्रदानं करिष्ये । तद्यथा--अग्न्यायतनस्य प्राच्याम्--ॐ त्रातारमिन्द्रमवि० इति पठित्वा हस्ते पुष्पाक्षतजलानि गृहीत्वा इन्द्राय नमः--इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि । भो इन्द्र स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शा- १७०

ग्रह न्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन प्र.प.
१७१ इन्द्रः प्रीयताम्-इति पुष्पाक्षतजलानि पूर्वाभिमुखो भूमौ क्षि-
पेत्। आग्नेय्याम्—ॐ त्वन्नोऽअग्नेतवदेव० अग्नये साङ्गाय
सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्त-
बलिं समर्पयामि। भो अग्ने स्वां दिशं रक्ष मम सकुटुम्बस्य
सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टि-
कर्ता वरदो भव। अनेन बलिदानेन अग्निः प्रीयताम्। दक्षिणे—
ॐ यमायत्वाङ्गिर० यमाय नमः—यमाय साङ्गाय सपरिवाराय १७२

सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्प-
यामि। भो यम स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरि-
वारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता
वरदो भव। अनेन बलिदानेन यमः प्रीयताम्। नैर्ऋत्याम्--
ॐअसुन्वन्त० निर्ऋतये नमः--निर्ऋतये साङ्गाय सपरिवाराय
सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पया-
मि। भो निर्ऋते स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य
सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टि-

प६ कर्ता वरदो भव। अनेन बलिदानेन निर्ऋतिः प्रीयताम्। प्र.प.
२७३ पश्चिमे--ॐतत्वायामि० वरुणाय नमः--वरुणाय साङ्गाय स-
परिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्त-
बलिं समर्पयामि। भो वरुण स्वां दिशं रक्ष बलिं भक्ष मम
सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता
पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन वरुणः
प्रीयताम्। वायव्याम्--ॐआनोनियु० वायवे नमः-- वायवे
साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपद- १७३

ग्रह धिमाषभक्तबलिं समर्पयामि । भो वायो स्वां दिशं रक्ष बलिं प्र.प.
१८४ भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शा-
न्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव । अनेन बलिदानेन
वायुः प्रीयताम् । उत्तरे—ॐ वयर्ठं० सोमव्रते० सोमाय नमः—
सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं स-
दीपदधिमाषभक्तबलिं समर्पयामि । भो सोम स्वां दिशं रक्ष
बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता
शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव । अनेन बलिदानेन १७४

सोमः प्रीयताम्। ईशान्याम्—ॐ तमीशानं जगत० ईशानाय नमः—ईशानाय नमः साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो ईशान स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन ईशानः प्रीयताम्। ईशानपूर्वयोर्मध्ये—ॐ अस्मेरुद्रामेहना० ब्रह्मणे नमः—ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो

४६ ब्रह्मन् स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य ५.५.
२७६ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो
भव। अनेन बलिदानेन ब्रह्मा प्रीयताम्। निर्ऋतिपश्चिमयोर्म-
ध्ये--ॐ स्योनापृथिवि० अनन्ताय साङ्गाय सपरिवाराय सायु-
धाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि।
भो अनन्त स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरि-
वारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता
वरदो भव। अनेन बलिदानेन अनन्तः प्रीयताम्। १७६

## ॥ अथैकतन्त्रेण दिक्पालबलिदानम् ॥

१७७ ॐ प्राच्च्यै दिशे स्वाहाऽर्व्वाच्च्यै दिशे स्वाहा दक्षिणायै दिशे
स्वाहाऽर्व्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहाऽर्व्वाच्यै दिशे स्वाहो-
दीच्यै दिशे स्वाहाऽर्व्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहाऽर्व्वाच्यै
दिशे स्वाहावाच्यै दिशे स्वाहाऽर्व्वाच्यै दिशे स्वाहा ॥ इन्द्रादिभ्यो
दशभ्यो दिक्पालेभ्यो नमः। इन्द्रादिदशदिक्पालेभ्यः साङ्गेभ्यः
सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमान् सदीपदधिमाष-
भक्तबलीन् समर्पयामि । भो इन्द्रादिदशदिक्पालाः स्वां स्वां १७८

दिशं रक्षत बलिं भक्षत मम सकुटुम्बस्य सपरिवारस्य आयुः-कर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारो वरदा भवत । अनेन बलिदानेन इन्द्रादयो दशदिक्पालाः प्रीयन्ताम् ।

## * अथ सूर्यादिनवग्रहबलिः *

ॐ आकृष्णेन० सूर्याय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहिताय इमं सदीपमाषभक्तबलिं समर्पयामि । भो सूर्य इमं बलिं गृहाण

मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता
२७६ पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन सूर्यः प्रीय-
ताम्। ॐइमन्देवा० सोमाय साङ्गा० उमा--आपोरूपाधिदेव-
तासहिताय भो सोम इमं बलिं० अने० सोमः प्री०। अग्नि-
र्मूर्द्धा० भौमाय साङ्गा० स्कन्दभूमिरूपाधिदेवताप्रत्यधिदे०
भो भौम इमं बलिं० अनेन बलि० भौमः प्रीय०। ॐउद्बुध्य-
स्वा० बुधाय साङ्गा० नारायणविष्णुरूपाधिदेवताप्रत्यधिदेव-
तासहि० भो बुध इमं बलिं भक्ष० अनेन ब० बुधः प्रीय०। १७६

ग्रह ॐ बृहस्पते० साङ्गा० ब्रह्मेन्द्ररूपाधिदेवताप्रत्याधिदेव० भो प्र.प.
१८० बृहस्पते दिशं रक्ष० अनेन बलिदाने० बृहस्पतिः प्री०। ॐ अन्ना-
त्परि० शुक्राय साङ्गा० इन्द्रेन्द्राणीरूपाधिदेवताप्रत्याधि देव०
भो शुक्र इमं बलिं० अनेन बलि० शुक्रः प्रीय०। ॐ शन्नोदेवी०
शनैश्चराय साङ्गाय स० यमप्रजापतिरूपाधिदेवताप्रत्याधि
देव० भो शनैश्चर० अनेन ब० शनैश्चरः प्रीय०। ॐ कयानश्चित्र०
राहवे साङ्गा० कालसर्परूपाधिदेवताप्रत्यधिदेव० भो राहो
इमं ब० अनेन ब० राहुः प्री०। ॐ केतुं कृण्वं० केतवे साङ्गा० १८०

म६ चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदेव० भो केतो इमं ब० अनेन प्र. प.
१८१ ब० केतुः प्री० । ॐ गणानान्त्वा० गणपतये साङ्गा० भो गणपते
इमं० अनेन ब० गणपतिः प्री० । ॐ अम्बेऽअम्बिके० दुर्गायै सा-
ङ्गायै० भो ! दुर्गे इमं बलिं गृहाण मम सकुटुम्बस्यायुः कर्त्री
क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री वरदा भव । अनेन
ब० दुर्गा प्रीयताम् । वायोये० वायवे सां० भो ! वायो इमं ब०
अनेन बलिदा० वायुः प्री० । ॐ घृतं घृत० आकाशाय साङ्गाय
१६ सपरि० भो ! आकाश इमं ब० अने० आकाशः प्री० । ॐ १८२

मह यावांकशा० अश्विभ्यां० साङ्गाभ्यां सपरिवाराभ्यां सायुधा- प्र.प.
१८२ भ्यां सशक्तिकाभ्यां इमं सदीपमासभक्तबलिं समर्पयामि ।
भो ! अश्विनौ इमं बलिं गृह्णीतं मम सकुटु० क्षेमकर्तारौ शान्ति-
कर्तारौ पुष्टिकर्तारौ वरदौ भवतम् । अनेन बलिदानेन अश्विनौ
प्रीयेताम् । ॐ वास्तोष्पते प्रति० वास्तोष्पतये साङ्गा० । भो !
वास्तोष्पते इमं बलिं० अनेन ब० वास्तोष्पतिः प्रीयताम् ।

❋ अथैकतन्त्रेण ग्रहबलिः ❋

ॐ ग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्रायमतिम् । तेषांविशि १८२

प्प्रियाणांव्वोहमिषमूर्ज्जꣳसमग्ग्रभमुपयामगृहीतोसीन्द्रा--
यत्त्वाजुष्टंङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम्॥ ग्रहपीठस्थे-
भ्यः सूर्यादिनवग्रहेभ्यः अधिदेवताप्रत्यधिदेवतापञ्चलोकपा-
लक्रतुसंरक्षकदशदिक्पालसहितेभ्यो देवेभ्यो नमः। सूर्यादि-
भ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं
सदीपदधिमाषभक्तबलिं समर्पयामि। भो सूर्यादयो देवाः इमं
बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः
क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारो वरदा

भवत । अनेन बलिदानेन साङ्गाः सूर्यादिनवग्रहाः प्रीयन्ताम् ।

## ❀ अथ षोडशमातृकाबलिः ❀

ॐ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मा मऽआ-
युः प्रमोषीर्मोऽअहन्तव वीरं विदेय तव देवि सन्दृशि ॥ सगणेश-
गौर्यादिमातृभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः इमं
सदीपमाषभक्तबलिं समर्प० । गणेशपूर्वकगौर्यादिमातरः इमं
बलिं गृह्णीत मम सकुटुम्बस्याभ्युदयकर्त्र्यः आयुःकर्त्र्यः क्षेम-
कर्त्र्यः पुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदा भवत । अनेन बलि-

दानेन सगणेशगौर्यादिमातरः प्रीयन्ताम् । प्र.प.

२६

२८५ * अथ प्रधानबलिः

ॐइदंविष्णुर्वि०। ॐश्रीश्चतेलक्ष्मीश्च०। ॐसुपर्णोऽसि
गुरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ। स्तोमऽआ-
त्माच्छन्दाꣳस्यङ्गानियजूꣳषिनाम। सामतेतनूर्वामदेव्यंय-
ज्ञायज्ञियंपुच्छन्धिष्ण्याःशफाः। सुपर्णोऽसिगरुत्मान्दिवं-
गच्छस्वःपत॥ महाविष्णुमहालक्ष्मीसुपर्णदेवतापूर्वकब्रह्मा-
दिसर्वतोभद्रमण्डलस्थदेवेभ्यो नमः। महाविष्णुमहालक्ष्मी- २८५

सुपर्णदेवतापूर्वकसर्वतोभद्रमण्डलस्थदेवेभ्यः साङ्गेभ्य सपरि- 
वारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपदधिमासभक्तबलिं
समर्पयामि। भो महाविष्णुमहालक्ष्मीसुपर्णदेवतापूर्वकब्रह्मा-
दिसर्वतोभद्रमण्डलस्थदेवाः इमं सदीपदधिमासभक्तबलिं
गृह्णीत मम सकुटुम्बस्यायुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः
पुष्टिकर्तारः तुष्टिकर्तारः वरदा भवत। अनेन बलिदानेन महावि-
ष्णुमहालक्ष्मीसुपर्णपूर्वकब्रह्मादिसर्वतोभद्रदेवाः प्रीयन्ताम्।

## ❀ अथ वास्तुबलिः ❀

ॐ वास्तोष्पते प्र०। वास्तोष्पतये शिख्यादिभ्यश्च साङ्ग० सशक्तिकेभ्यो नमः। इमान् सदीपदधिमाषभक्तबलीन् समर्पयामि। भो वास्तोष्पतिशिख्यादिदेवताः इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यो वरदा भवत। अनेन बलिदानेन सवास्तोष्पतिशिख्यादयः प्रीयन्ताम्।

# अथ योगिनीबलिः

ॐ अम्बेऽअम्बिके० ॐ श्रीश्चते० । ॐ पावुका नुः सरस्वती वाजेभिर्वाजिनीवती । युज्ञंवष्टुधियावसुः ॥ चतुःषष्टियोगिनीभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपदधिमाषभक्तबलिं समर्पयामि । भो भो महाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीदेवताः इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः वरदा भवत। अनेन

यह बलिदानेन महाकालीमहालक्ष्मीमहासरस्वतीपूर्वकयोगिन्यः ५.१.
१८९ प्रीयन्ताम् ।

## ❀ अथ क्षेत्रपालबलिः ❀

शूर्पादौ चतुर्मुखदीपमाषभक्तदध्योदनताम्बूलदक्षिणा-
कूष्माण्डोदककुम्भयुतं हरिद्राकुङ्कुमसिन्दूरपताकारक्तपुष्प-
युतं बलिञ्च संस्थाप्य क्षेत्रपालादिभ्यो नमः । ॐ आवाह-
यामि देवेशं भैरवं क्षेत्रपालकम् । दिव्यतेजं महाकायं
नानाभरणभूषितम् ॥ क्षेत्राणां रक्षणार्थाय बलिं गृह्णन- १८६

प्र.६ मोऽस्तु ते। असुरा यातुधानाश्च पिशाचोरगराक्षसाः ॥ शा- प्र.प.
किन्या यक्षवेताला योगिन्यः पूतनाः शिवाः। जृम्भकाः
१६० सिद्धगन्धर्वा नानाविद्याधरा नगाः। दिक्पाला लोकपालाश्च
ये च विघ्नविनायकाः ॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च
महर्षयः। मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥ ॐ नहिस्प-
शमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेनमवृ-
धन्नमृताऽअमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः ॥ वेतालादि- १६०

मह परिवारयुतक्षेत्रपालादिसर्वभूतेभ्यः साङ्गेभ्यः सपरिवारेभ्यः प.प.
१६१ सायुधेभ्यः सशक्तिकेभ्यः भूतप्रेतपिशाचराक्षसशाकिनीसहि-
तेभ्यः कुङ्कुमारक्तपुष्पादियुतं सदीपं सदक्षिणामिमं बलिं
समर्पयामि । भो भो क्षेत्रपालादयः इमं बलिं गृह्णीत यज-
मानस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः
तुष्टिकर्तारः निर्विघ्नकर्ता : वरदा भवत । अनेन सार्वभौतिक-
बलिप्रदानेन क्षेत्रपालादयः प्रीयन्ताम् । अयं बलिं शूद्रेण
दुर्ब्राह्मणेन वा पृष्ठतोऽनवेक्षमाणेन निर्ऋतिदेशे चतुष्पथे १६१

प्र॰ हारयेत्—ॐहिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रन्दतेस्वाहा प्र.प.

१६२ वक्रन्दायस्वाहाप्प्रोथतेस्वाहांप्रप्रोथायस्वाहांगन्धायस्वा-

हांघ्रातायस्वाहानिविंष्टायंस्वाहोपंविष्टायस्वाहासन्दिताय

स्वाहावल्गतेस्वाहांऽऽसीनायस्वाहाशयांनायस्वाहास्वपंते

स्वाहाजांग्रतेस्वाहाकूजतेस्वाहाप्प्रबुंद्धायस्वाहांविजृम्भमा-

णायस्वाहाविचृंतायस्वाहासंहांनायस्वाहोपंस्थितायस्वा-

हायंनायस्वाहाप्प्रायंणायस्वाहा॥ ततः हस्तौ पादौ प्रक्षालयेत्। १६२

ग्रह प्र. ५.

## ❋ अथ पूर्णाहुतिः ❋

१६३ ग्रहशान्तिकर्मणः सम्पूर्णफलप्राप्त्यर्थं मृडनामाग्नौ पूर्णा-
हुतिं होष्यामि इति सङ्कल्प्य चतुःकृत्वो द्वादशकृत्वो वा-
ऽऽज्यं स्रुवेण स्रुचि गृहीत्वा शिष्टाचारात्तस्यां सपूगफलं
ताम्बूलवीटकं तदुपरि पुष्पाणि तदुपरि पट्टवस्त्रवेष्टितं रक्त-
सूत्रबद्धं पुष्पमालोपशोभितं सुगन्धद्रव्यासिन्दूरादिद्रव्यच-
र्चितं नारिकेलादिफलं निधाय- ॐ पूर्ण्णादर्व्विपरापतसुपूर्ण्णा
शा पुनरापंत । व्वस्नेवव्विक्रीणावहाऽइषमूर्ज्जंᳪशतक्रतो ॥ इति १६३

ग्रह पूर्णाहुतिं सम्पूज्य अधोमुखस्रुवच्छन्नां स्रुचमादाय उत्थाय प्र.प.
१६४ ॐ समुद्रादूर्म्मिर्म्मधुमाँ२उदारदुपाᳬंशुनासमम्मृतत्वमानट् ।
घृतस्यनामगुह्यंय्यदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥
व्वयन्नामप्प्रब्ब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ।
उपब्ब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमीद्गौरऽएतत् ॥ २ ॥
चत्वारिशृङ्गात्रयोऽअस्यपादाद्द्वेशीर्षेसप्तहस्तासोऽअस्य । त्रि-
धाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥३॥ त्रि-
धाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् । इन्द्र- १६४

प्र६ ऽएकुꣳसूर्य्युऽएकंञ्जजानव्वेनादेकꣳस्वधयानिष्टंतक्षुः ॥ ४ ॥ प्र.प
१८५ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणानावचक्षे । घृत-
स्यधाराऽअभिचाकशीमिहिरण्ययोव्वेतसोमध्यऽआसाम् ५
सम्म्यक्क्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ।
एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ६ । सि-
न्धोरिवप्प्राद्ध्वनेशूघनासोव्वातप्प्रमियःपतयन्तियह्वाः । घृत-
स्यधाराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्न्वमानः । ७ ।
अभिप्प्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोऽअग्निम् । १६५.

घृतस्यधाराꣳसमिधोनसन्तताञ्जुषाणोहर्य्यतिजातवेदाः ॥८॥ 

कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ।
यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥९॥ अ-
भ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ।
इमंयज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥१०॥ धाम-
न्तेविश्वम्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि । अपाम-
नीकेसमिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्म्मिम् ॥११॥
पुनस्त्वादित्यारुद्रावसवःसमिन्धताम्पुनर्ब्रह्माणोवसुनीथय- 

६६ ज्ञैः । घृतेनत्वन्तन्वंवर्धयस्वसत्याःसंन्तुयजमानस्यका- प्र.प.
१६७ मांः ॥१२॥ सप्ततेऽअग्नेसमिधःसप्तजिह्वाःसप्तऽऋषयःसप्त-
धामप्रियाणि । सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरा-
पृणस्वघृतेनस्वाहा ॥१३॥ मूर्द्धानंदिवोअरतिंपृथिव्याऽवैश्वा-
नरऽमृतऽआजातमग्निम् । कविꣳसम्राजमतिथिञ्जनानामा-
सन्नापात्रञ्जनयन्तदेवाः ॥ १४ ॥ पूर्णादर्विपरापतसुपूर्णापुनरा
पत । वस्नेवविक्रीणावहाऽइषमूर्जꣳशतक्रतोस्वाहा ॥ १५ ॥
इदमग्नये वैश्वानराय आदित्यरुद्रवसुभ्यः शतक्रतवे सप्तवते १६७

अग्नयेऽद्धयश्च न मम इति त्यजेत् ।

## ❋ अथ वसोर्धाराहोमः ❋

कृतस्य ग्रहयागकर्मणः साङ्गतासिध्यर्थं वसोर्द्धारां होष्यामि इतिसङ्कल्प्य वह्नेरुपरि स्तम्भद्वयविधृतामौदुम्बरीमृज्वीमकोटरां बाहुप्रमाणामार्द्रां वसोर्द्धारां प्रागग्रां निधाय तदुपरि शृङ्खलाविधृत पूरितने निर्मलघृतपूरितेन ताम्रादिघृतेनाधोयवमात्रच्छिद्रेणाज्यं विमुञ्चताऽग्नेरुपरि वसोर्धारां पातयेत् । तस्याः मुखे सुवर्णनिर्मितजिह्वबध्नीयात् । तस्यां च घृतधारायां पतन्त्यां

अह स्रुवप्रणालिकया ऽग्नौ पतन्त्यां मन्त्रान् पठेत्। ते यथा—ॐ सप्त- प्र.प्र.
१६६ ते ऽअग्ने समिधः सप्त जिह्वाः सप्त ऽऋषयः सप्त धाम प्रियाणि। सप्त
होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा॥ शुक्र
ज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च। शुक्र-
श्च ऽऋतपाश्चात्यंहाः॥ ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् च। मित
श्च सम्मितश्च सभराः॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धर्त्ता
च विधर्त्ता च विधारयः॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च।
अन्तिमित्रश्च दूरे ऽअमित्रश्च गणः॥ ईदृक्षास ऽएतादृक्षास ऽउषु- १६६

९६ णं÷ सदृक्षासःप्रतिसदृक्षासऽएतन । मितासश्चसम्मितासो प्र.प.
२०० नोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ स्वतवाँश्चप्रघासीच
सान्तपनश्चगृहमेधीच । क्रीडीचशाकीचोज्जेषी ॥ इन्द्रन्दै-
वीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुव-
र्त्मानोभवन् । एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चा-
नुवर्त्मानोभवन्तु ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्ने
सरिरस्यमध्ये । उत्संञ्जुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसदन-
माविशस्व ॥ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्य २००

प्र६ धामं। अनुष्ष्वधमावंहमादयंस्वस्वाहांकृतंवृषभवक्षिहव्यम्॥ प्र.प.

२०१ वसोःपवित्रंमसिशतधांरवसोःपवित्रंमसिसहस्रंधारम्। देव-
स्त्वांसवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः
स्वाहा॥ इदमग्नये वैश्वानराय न मम।

## ❋ अथाग्निप्रदक्षिणादिकर्म ❋

अग्निं प्रदक्षिणीकृत्य अग्नेः पश्चात् पश्चिमदेशे प्राङ्मुख
उपविश्य स्रुवेण भस्मानीय--ॐ त्र्यायुषञ्जमदग्नेःकश्यपस्य
त्र्यायुषम्। यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम्॥ ततः प्रोक्ष- २०१

ग्रह णीप्रक्षिप्तस्य आज्यस्य यजमानेन प्राशनमवघ्राणं वा कार्यम् । प्र.प.
२८२ तत आचमनम् । ततः प्रणीतापात्रे निहिते आदाय ग्रन्थिमु-
क्त्वा ताभ्यां शिरः संमृज्य ते पवित्रे अग्नौ प्रक्षिपेत् ।

## ❀ अथ पूर्णपात्रदानम् ❀

अद्य कृतस्य ग्रहशान्तिकर्मणः साङ्गतासिद्धये तत्सम्पू-
र्णफलप्राप्तये च इदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यमहं संप्रददे ।

## ❀ अथ प्रणीताजलेन संस्कारादिकथनम् ❀

अग्नेः पश्चात् प्रणीतापात्रं सजलमानीय निधायोमुखं २०२

कुर्यात् । विमोकजलम्—ॐआपः शिवा शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ इति मन्त्रेण उपयमन-कुशादिनाऽऽदाय यजमानपत्नीपुत्रादिशिरः सुसिञ्चेत् । एष वै यागीयोऽवभृथः--इति च वदेत् । उपयमनकुशानग्नौ प्रहरेत् । इदमेवमार्जनमवभृथस्नानमिति पद्धतिकाराः ।

### ❋ अथ श्रेयोदानम् ❋

अद्य ग्रहशान्तिहोमकर्मणः श्रेयोदानं करिष्ये । तत्रादौ—ॐशिवा आपः सन्तु । सौमनस्यमस्तु । ॐअक्षतं चारिष्टं

ग्रह चास्तु। ॐ दीर्घमायुः शान्तिः पुष्टितुष्टिश्चास्तु--इति क्रमेण प्र.प.
२०४ उदकपुष्पाक्षतोदकानि दत्वा पूगफलनारिकेलादिकमादाय भवन्ति योगेन मया अस्मिन् ग्रहशान्त्याख्यकर्मणि तदुत्पन्नं यच्छ्रेयस्तत्तुभ्यहं संप्रददे। तेन श्रेयसा त्वं श्रेयोवान् भव--इति फलादिकं यजमानाय दद्यात्। यजमानश्च सुगुप्तदेशे स्थापयेत्। यथावसरं भक्षयेच्च।

### * अथाचार्यमात्रकर्तृकश्रेयोदानम् *

भवन्नियोगेन मया एभिर्ब्राह्मणैः सह कृतं यदाचार्यत्वं २०४

२८ ब्रह्मत्वं सदस्यं गाणपत्यत्वमुपद्रष्टत्वं जपहोमादिकं च बहु- प्र.१.
२० त्पन्नं यच्छ्रेयस्तदमुना फलादिना तुभ्यमहं संप्रददे । इति
वाक्येन जलं यजमानहस्ते क्षिपेत् ।

❋ अथाचार्यादीनां दक्षिणासंकल्पः ❋

कृतस्य ग्रहयागकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफल-
प्राप्तये च आचार्यादिभ्यो महर्त्विग्भ्यः सूक्तपाठकेभ्यो मन्त्र-
जापकेभ्यो हवनकर्तृभ्योऽन्यभ्यो देवयजनमागतेभ्यश्च दाक्षि- २०५.
१८ णां त्रिभज्य दातुमहमुत्सृज्ये ।

## ❋ अथाभिषेकः ❋

आचार्यादयः सर्वे ऋत्विजास्तिष्ठन्तः उदङ्मुखा वरुणकलश-
ग्रहपीठसमीपस्थरुद्रकलश-प्रधानकलशानां पात्रान्तरे उद्-
क्रमानीय सकुटुम्बं सपत्नीकं च वामतः कृत्वा यजमानम-
भिषिञ्चेयुरभिर्मन्त्रैः—ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुम-
हेश्वराः। वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः। प्रद्युम्नश्चा-
निरुद्धश्च भवन्तु विजयाय ते। आखण्डलोऽग्निर्भवान् नमो
वै निऋतिस्तथा॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा विभुः।

४३ ब्राह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ कीर्तिल- प.प.
२०. क्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रियामतिः। बुद्धिर्लज्जा वपुः शान्ति-
स्तुष्टिः कान्तिश्च मातरः ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः
समागताः। आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुकेतुश्च तर्पिताः। देवदानवगन्धर्वा
यक्षराक्षससपन्नगाः॥ ऋषयो मनवो गावो देवमातर एव च।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां तथा ॥ अस्त्राणि
सर्वशास्त्राणि राजानो वाहनानि च। औषधानि च रत्नानि १०७.

कलस्यावयवाश्च मे ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः। एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये॥ अमृताभिषेकोऽस्तु। ततः—कृतस्याभिषेककर्मणः साङ्गफलप्राप्तये अभिषेककर्तृभ्यो ब्राह्मणेभ्यो दक्षिणां विभज्य ददे-इति दद्यात्।

१– ॐआदित्याय विद्महे प्रभाकराय धीमहि। तन्नः सूर्यः प्रचोदयात्। ॐअमृताङ्गाय विद्महे कलारूपाय धीमहि। तन्नः सोमः प्रचोदयात्। ॐअङ्गारकाय विद्महे शक्तिहस्ताय धीमहि। तन्ना भौमः प्रचोदयात्। ॐसौम्यरूपाय विद्महे वाणेशाय धीमहि। तन्नो बुधः प्रचोदयात्। ॐआङ्गिरसाय विद्महे दिव्यदेहाय धीमहि। तन्नो जीवः प्रचोदयात। ॐभृगुजाय विद्महे दिव्यदेहाय धीमहि। तन्नः शुक्रः प्रचोदयात्। ॐभगभवाय विद्महे मृत्युरूपाय धीमहि। तन्नः गौरिः प्रचोदयात। ॐशिरोरूपाय विद्महे अमृतेशाय धीमहि। तन्नो राहुः प्रचोदयात्। ॐपद्मपुत्राय विद्महे अमृतेशाय धीमहि। तन्नः केतुः प्रचोदयात्।

## ❁ अथोत्तरपूजनम् ❁

ततः—कृतस्य ग्रहशान्तिकर्मणः साङ्गतासिद्धये आवा- २०८

हितदेवानामुत्तरपूजां करिष्ये--इति संकल्प्य गणपत्यादि- प्र.१.
प६
२०६ देवानां पूजां विधाय पुष्पाञ्जलिं दद्यात् ।

## * अथ पीठदानादिसंकल्पः *

कृतस्य ग्रहशान्तिकर्मणः समृद्ध्यर्थमिमानि सोपस्करादिसहितानि प्रधानपीठादीनि आचार्याय सम्प्रददे। कृतैतत्पीठदानकर्मणः साङ्गतासिद्ध्यर्थं यथाशक्तिदक्षिणामाचार्याय सम्प्रददे । २०९

## * अथ ध्वजापताकादिदानसंकल्पः *

कृतस्य ग्रहशान्तिकर्मणः समृद्ध्यर्थमिदं मण्डपं ध्वजपताकाद्युपस्करयुतमाचार्याय संप्रददे । कृतस्य मण्डपदानस्य साङ्गतासिद्ध्यै यथाशक्तिद्रव्यमाचार्याय संप्रददे। कृतस्य ग्रहशान्तिकर्मणः समृद्ध्यर्थमिमानि यज्ञपात्राणि यज्ञपूजोपकरणानि चाचार्याय संप्रददे ।

## * अथ ब्राह्मणभोजनसंकल्पः *

कृतस्य ग्रहशान्तिकर्मणः समृद्ध्यै यथाशक्तिब्राह्मणान्

भोजयिष्यामि ।

## ❋ अथ भूयसीदक्षिणासंकल्पः ❋

कृतेऽस्मिन् ग्रहशान्तिकर्मणि न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो नटनतर्कगायकेभ्यो दीनानाथेभ्यश्च यथाशक्तिभूयसीं दक्षिणां विभज्य दातुमहमुत्सृज्ये ।

## ❋ अथ देवविसर्जनम् ❋

ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे । उपप्रयंन्तुमरुतः

सुदानंवुऽइन्द्रंप्राशुर्भवाशचां ॥ यान्तु देवगणाः सर्वे पूजा-
मादाय मामिकाम्। इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥
ॐयज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांयोनिंङ्गच्छस्वाहा। एषतें
यज्ञोयंज्ञपतेसुहसूंक्तवाकःसर्वीवीरस्तञ्जुंषस्वस्वाहा॥ गच्छ
गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र
गच्छ हुताशन ॥

## ❋ अथ क्षमापनम् ❋

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वा-

भ्यां तस्मै यज्ञात्मने नमः॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं
सुरेश्वर। यन्मम त्रुटितं देव परिपूर्णं तदस्तु मे॥ अपुत्राः पुत्रिणः
सन्तु पुत्रिणः सन्तु पौत्रिणः। निधनाः सधना सन्तु जीवन्तु
शरदां शतम्॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दा-
सोऽयमिति मां मत्वा क्षमस्व परमेश्वर॥ जपच्छिद्रं तप-
च्छिद्रं यच्छिद्रं शान्तिकर्मणि। सर्वं भवतु मेऽछिद्रं ब्राह्म-
णानां प्रसादतः॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तुनिर्भयाः॥ सर्वे च सुखिनः

४६ सन्तु सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मां कश्चि- प्र.प.
२१४ द् दुखमाप्नुयात्॥ अज्ञानात् विस्मृतेर्भ्रान्त्या यन्न्यूनमाधिकं
कृतम्। विपरीतं तु तत्सर्वं क्षमस्व परमेश्वर॥ न्यूनातिरिक्तं
यत्कर्म जपहोमार्चनादिकम्। कृतमज्ञानतो देव तन्मम क्षन्तु
मर्हसि॥ पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः। त्राहि
मां पुण्डरीकाक्ष सर्वपापहरो हरिः॥ प्रमादात्कुर्वतां कर्म प्रच्य-
वेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पू- २१६

८६ र्णतां याति सद्यो वन्दे तमच्युतम् ॥ ततः—ॐ विष्णवे नमः ३ प.७
२१५ इति वदेत् । धृतं पवित्रं कर्मान्ते त्यजेत् । अवशिष्टं जलं तुल-
स्यादौ क्षिपेत् । ततः सुहृदादियुतः सोत्साहं सन्तोष्य इष्टैः सह
भुञ्जीतेति शम् ।

## ❋ अथाशीर्वादः ❋

स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोहस्तिवाजिधनधा-
न्यसमृद्धिरस्तु । ऐश्वर्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु कल्या-
णमस्तु सततं हरिभक्तिरस्तु ॥ त्रिनयनमभिमुखानिःसृता- २१५

मिमां य इह पठेत्प्रयतश्च सदा द्विजः। स भवति धनधान्यपशुपत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीति॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते। धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः। शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव॥

❀ इति ग्रहशान्तिप्रयोगः ❀





मुद्रकः—बाबू गणेश प्रसाद गुप्त, स्वतन्त्र भारत प्रेस, हड़हासराय, बनारस सिटी।